२ आ

# पदवाक्यप्रमाणपारावारपारीणलोकानुग्रहकृतानेकग्रन्थ

# महामहोपाध्यायन्यायविशारदन्यायाचार्य

# श्रीयशोविजयगणिकृतो न्यायालोकः

## ॥ ॐ नमोवीतरागाय ॥

# ॥ न्यायालोकः ॥

॥ महामहोपाध्याय-न्यायविशारदन्यायाचार्योपपदश्रीयशोविजयगणिविरचित. ॥

प्रणम्य परमात्मानं जगदानन्ददायिनम् । न्यायालोकं वितनुते धीमान् न्यायविशारदः ॥ १ ॥

इह खलु सकलदुःखजिहासया परमानन्दसम्पत्तये च मुक्त्युपायेषु प्रवर्तमाना दृश्यन्ते मुनयः । तत्र केयं मुक्तिः, समानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंस इति नैयायिकादयः । प्रमाणं चात्र 'दुःखसन्ततिरत्यन्तमुच्छिद्यते सन्ततित्वात् प्रदीपसन्ततिवद्' इति प्राञ्चः । तदसत् । सन्ततिः खल्वेकजातीयमनेकं वस्तु, तत्रैकजातीयत्वं यदि सत्त्वादिना तदा मनसा व्यभिचारात्, यदि च गुणत्वदुःखत्वादिना तदा दृष्टान्ते साधनवैकल्यप्रसङ्गात् । आत्मकालान्यवृत्तिध्वंसप्रतियोगिवृत्तिदुःखत्वं दुःखप्रागभावानधिकरणवृत्तिध्वंसप्रतियोगिवृत्ति कार्यमात्रवृत्तिधर्मत्वात् प्रदीपत्ववदिति सर्वमुक्तिसिद्धौ चैत्रदुःखादिकं पक्षीकृत्य तत्तन्मुक्तिसाधनमिति वर्द्धमानप्रभृतयः । तदसत् । अप्रयोजकत्वात्, अन्यथानभिमतसाध्यसिद्धेरतिप्रसङ्गात् । यत्तु सर्वमुक्त्यभावेऽयोग्यत्वशङ्कया प्रवृत्त्यनुपपत्तिः । न च प्रमदप्रभोगानभिष्वङ्गादिना मुमुक्षुचिह्नेन मुक्त्युद्देशेन तच्छङ्कानिवृत्तिः, संसारित्वेनैव मोक्षं प्रति स्वरूपयोग्यत्वात् । प्रमादतोऽपि संसा-

रित्वेनैव हेतुत्वेचेति, तन्न । संसारित्वस्य नित्यज्ञानादिमद्भिन्नात्मत्वरूपस्य नानात्वाद्गुरुत्वाच्च लाघवात् भव्यत्वस्यैव मुक्तिशमादिस्वरूपयोग्यतावच्छेदकत्वकल्पनात् । एतेन शमादेः श्रुतौ सहकारित्वेन बोधनात् न स्वरूपयोग्यतावच्छेदकत्वम्, शमादिसम्पन्नत्वेन च न मोक्षाधिकारिता, श्रुतिसङ्कोचापत्तेः, शमादिसम्पत्तेरधिकारनिश्चयस्ततश्च तदर्थप्रवृत्तौ शमादिसम्पत्तिरित्यन्योन्याश्रयाचेत्युक्तावपि न क्षतिः, भव्यत्वस्य शमादिसहकारित्वसम्भवात् तस्यैवाधिकारिविशेषणत्वाच्च, तन्निश्चयश्च तच्छङ्क्यैव तस्यास्तद्व्याप्यत्वादित्यध्यात्ममतपरीक्षायां प्रपञ्चितम् । शमादिमत्त्वेनाधिकारित्वेऽप्यनतिशयितशमादिना प्रवृत्त्युत्तरमतिशयितशमादिसम्पत्तेर्नान्योऽन्याश्रयः । प्रवृत्तेः प्राक् कथमणीयस्यपि शमादिसम्पत्तिरिति चेत्, कर्मविगमात्, सोऽपि कथमिति चेत्, तथाभव्यत्वपरिपाकात्, सामग्रीं विना कथं तत्परिपाक इति चेत्, स्वभावादिति दिग् । किञ्चातीतदुःखवद्वर्त्तमानदुःखस्यापि स्वत एव नाशादपुरुषार्थत्वम्, न च हेतूच्छेदे पुरुषव्यापारः प्रायश्चित्तवदिति वाच्यम्, तथा सति दुःखानुत्पादस्य दुःखसाधनध्वंसस्यैव वा प्रयोजनत्वप्रसङ्गात् । न च चरमदुःखध्वंसेऽन्वयव्यतिरेकाभ्यां तत्त्वज्ञानस्य प्रतियोगिवद्धेतुत्वं प्रतियोगिनमुत्पाद्य तेन तदुत्पादनात् पुरुषार्थसाधनतया दुःखतत्साधनयोरपि प्रवृत्तिदर्शनादिति वाच्यम्, चरमत्वस्यार्थसमाजसिद्धत्वेन कार्यतानवच्छेदकत्वात्, किञ्चैवमन्त्यदुःखे उपान्त्यदुःखमेव हेतुः कुतो न स्यात् । विशिष्टदुःखसाधनध्वंस एव मुक्तिरित्यपि न, प्रायश्चित्तादावपि दुःखं माभूदित्युद्दिश्यैव प्रवृत्तेर्दुःखानुत्पादस्यैव प्रयोजनत्वात् । न च तस्यासाध्यत्वं, योगक्षेमसाधारणजन्यतायाः प्रागभावेऽपि सत्त्वात् । आत्यन्तिकदुःखप्रागभावो मोक्षस्तस्य प्रतियोगिजनकाधर्मनाशमुखेन कृतिसाध्यत्वादित्यतिमन्दं, प्रागभावस्य प्रतियोगिजनकत्वनियमेन मुक्तस्य पुनरावृत्तिप्रसङ्गात् । सहकारिविरहेण दुःखानुत्पादे तस्योत्तरावधिविधुरत्वेनात्यन्ताभावत्वप्रसङ्गात् ॥ अपरे तु दुःखेनात्यन्तविमुक्तश्चरतीति श्रुतिस्वरसाद्दुःखात्यन्ताभाव एव मुक्तिः दुःखसाधनध्वंस एव स्ववृत्तिदुःखस्यात्यन्ताभावसम्बन्धः स च साध्य एवेत्याहुः । तत् न । दुःखसाधनध्वंसस्य दुःखात्यन्ताभावसम्बन्धत्वे मानाभावात् । दुःखध्वंसस्तोम एव मुक्तिरित्यपि वार्त्तम् । स्तोमस्य कथमप्यसाध्यत्वात् । त्रिदण्डिनस्त्वानन्दमयपरमात्मनि जीवात्मलयो मोक्ष इत्याहुः । तत्र लयो यद्येकादशेन्द्रियसूक्ष्ममात्रावस्थितपञ्चभूतात्मकलिङ्गशरीरापगमस्तदा नाम कर्मक्षय एव स इति कर्मक्षयरूपमोक्षवादिकक्षाप्रवेशो, यदि चोपाधिशरीरनाशे औपाधिकजीवनाशस्तदा तेन रूपेणाकाम्यत्वादपुरुषार्थत्वम् । बौद्धास्त्वनुपप्लवा चित्तसन्ततिरपवर्गः, न च शरीरादिनिमित्तं विना नैमित्तिकचित्तसन्तानानु-

स्यादिति वाच्यम्, पूर्वपूर्वविज्ञानक्षणानामेवोत्तरोत्तरविज्ञानक्षणहेतुत्वात्; सुषुप्तावप्यभिभूतज्ञानाभ्युपगमादविशिष्टाद्विशिष्टोत्पत्तेश्च तथाशक्तियोगितया सम्भवात्, न च शरीराद्यनाहितातिशयस्य ज्ञानक्षणस्य कथमुत्तरज्ञानजनकत्वमिति वाच्यम्, मुक्तिप्राक्क्षणे विशिष्टभावनयैवातिशयाधानादित्याहुः । तदसत् । अन्वयिद्रव्याभावे बद्धमुक्तव्यवस्थानुपपत्तेः, सन्तानस्यावास्तवत्वात्, अतिशयाधायकत्वेनाभिमतादेव सहकारिचक्रात् कार्योत्पत्तावेकान्वक्षणभिदेकिमचित्तसन्ततौ मानाभावाच्चेति दिक् ॥ स्वातन्त्र्यं मुक्तिरित्यन्ये । तेषां स्वातन्त्र्यं यदि कर्मनिवृत्तिस्तदा सिद्धान्त एव । ऐश्वर्यं चेत्, अभिमानाधीनतया संसारविलसितमेव तत् । प्रकृतितद्विकारोपघातविलये पुरुषस्य स्वरूपेणावस्थानमिति सांख्याः । तन्न स्वरूपावस्थानस्यात्मरूपस्यासाध्यत्वात्, प्रकृत्यादिप्रक्रियायां प्रमाणाभावाच्च । अग्रिमचित्तानुत्पादे पूर्वचित्तनिवृत्तिरित्यन्ये । तदपि तुच्छम् । अग्रिमचित्तानुत्पादस्य प्रागभावरूपस्यासाध्यत्वात् चित्तनिवृत्तेरनुद्देश्यत्वात् च । आत्महानं मुक्तिरिति चार्वाकास्तन्न । वीतरागजन्मादर्शनन्यायेन नित्यतया सिद्धस्यात्मनः सर्वथा हातुमशक्यत्वात् आत्महानस्यानुद्देश्यत्वाच्च । नित्यनिरतिशयसुखाभिव्यक्तिर्मुक्तिरिति तौतातिताः । तन्नेति नैयायिकादयः । नित्यसुखे प्रमाणाभावात् । न च नित्यं विज्ञानमानन्दं ब्रह्मेति श्रुतिरेव तत्र प्रमाणं, न च नित्यसुखे सिद्धे ब्रह्माभेदबोधस्तद्बोधने च नित्यसुखसिद्धिरिति परस्पराश्रय इति वाच्यम् । स्वर्गत्वमुपलक्षणीकृत्य स्वर्गविशेषे यागकारणताबोधवत् सुखत्वमुपलक्षणीकृत्य सुखविशेषे ब्रह्माभेदबोधोपपत्तेः । यद्वा नित्यं सुखं बोधयित्वा तत्र ब्रह्माभेदोऽपि विधिनैव बोध्यते, न च वाक्यभेदो वाक्यैकवाक्यत्वात्, न चानन्दमित्यत्र नपुंसकलिङ्गत्वानुपपत्तिः, छान्दसत्वात्, न चानन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितमिति भेदपरषष्ठ्यनुपपत्तिः, राहोः शिर इतिवदभेदेऽपि षष्ठीदर्शनादिति वाच्यम् । आत्मनोऽनुभूयमानत्वेन नित्यसुखस्याप्यनुभवप्रसङ्गात्, सुखमात्रस्य स्वगोचरसाक्षात्कारजनकत्वनियमात्, न चात्माभिन्नतया सुखमनुभूयत एव, सुखत्वं तु तत्र नानुभूयते देहात्माभेदभ्रमवासनादोषादात्यन्तिकदुःखोच्छेदरूपव्यञ्जकाभावाद्वा, यद्वा सुखानुभवसामग्र्या एव सुखत्वानुभवसामग्रीत्वमिति नोक्तोपपत्तिरिति । तन्न । सुखविशेष्यकदुःखाभावत्वादिप्रकारकभ्रमदशायां सुखस्याननुभवादिति वाच्यम्, आत्मसुखयोरभेदे सुखत्वस्यात्मत्वतुल्यव्यक्तिकत्वेनात्मत्वान्यजातित्वासिद्धेः । किञ्च दुःखमप्येवं सुखं स्यात्, सर्वं खल्विदं ब्रह्मेति श्रुत्यानन्दमयब्रह्माभेदबोधनात्, सुखत्वेनाननुभवस्य चोक्तरीत्योपपत्तेः ॥ सिद्धार्थत्वेन नेयं श्रुतिः स्वार्थे प्रमाणमिति चेत्, प्रकृतेऽपि तुल्यम् । किञ्च सुखत्वानुभवसामान्ये न मिथ्याज्ञानवासना-

दोषः, अनित्यसुखेऽपि सुखत्वाननुभवप्रसङ्गात्, किन्तु नित्यसुखत्वानुभवे आत्मनि सुखत्वानुभवे चेति गौरवम् । तस्मादानन्दं ब्रह्मेति मत्वर्थीयाच्प्रत्ययान्ते-नानन्दवत्त्वं बोध्यते न तु तदभेद इति । एतेनाविद्यानिवृत्तौ विज्ञानसुखात्मकः केवल आत्मापवर्गेऽस्तीति वेदान्तिमतं निरस्तम् । ज्ञानसुखात्मकब्रह्मणो नित्यत्वे मुक्तसंसारिणोरविशेषापातात् तादृशात्मनः कृत्यसाध्यत्वाच्च । न चाविद्यानिवृत्तिरेव पुरुषार्थोऽविद्याया असत्त्वेन नित्यनिवृत्तत्वादनिर्वचनीयतया-श्चानिर्वचनीयत्वादिति । अत्रोच्यते । कृत्स्नकर्मक्षय एव मुक्तिस्तस्यैवानेकान्तभावनाजनिततत्त्वज्ञानोपबृंहितशैलेशीकरणरूपप्रयत्नसाध्यत्वात् । न च भोगादेव कर्मक्षयस्तत्त्वज्ञानादपि कायव्यूहद्वारा तत्तच्छरीरोपभोग्यकर्मोपभोगेनैवादृष्टक्षयाभ्युपगमादिति वाच्यम् । दृष्टविपरीतकल्पनप्रसङ्गात्. मनुजादिशरीरसत्त्वे शूकरा-दिशरीरानुत्पत्तेः, भोगतत्त्वज्ञानादीनामेकशक्तिमत्त्वेन कर्मनाशकत्वौचित्यात्, उपभोगादेव कर्मक्षयेऽपरकर्मनिमित्तव्यापारात् प्रचुरतरकर्मार्जनेऽनिर्मोक्षप्रसङ्गाच्च, तत्त्वज्ञानस्य त्वागामिकर्मानुत्पाद इव सञ्चितकर्मनाशेऽपि सामर्थ्यम् यथा भाविशीतस्पर्शानुत्पादसमर्थस्योष्णस्पर्शस्य पूर्वशीतस्पर्शनाशेऽपीति नानिर्मोक्षः । तस्यां च दशायां परमानन्दार्थितयैव प्रवृत्तिः । यद्वा कर्मक्षयद्वारा ज्ञानक्रियासाध्यः परमानन्द एव मुक्तिः नहि सुखेच्छां विना प्रवृत्तिः सम्भवति प्रेक्षावतां, चिकित्सादावपि दुःखध्वंसनियतसुखार्थितयैव प्रवृत्तेः । न चैवं सुखस्थलेऽपि दुःखाभावार्थितयैव प्रवृत्तिरित्यविनिगमः । तत्र दुःखध्वंसस्यानावश्यकत्वात्, तदत्यन्ताभावादेश्चासाध्यत्वात् । किञ्च दुःखाभावदशायां सुखं नास्तीति ज्ञानं प्रवृत्तिप्रतिबन्धकं, सुखहानेरनिष्टत्वेन बलवदनिष्टाननुबन्धित्वस्य प्रतिसन्धातुम-शक्यत्वात् । न च रागान्धतया पारदार्ये दुःखानुबन्ध्यप्रतिसन्धानवद्वीतरागतया सुखहानेरनिष्टत्वाप्रतिसन्धानात् न प्रवृत्तिप्रतिबन्ध इति वाच्यम्, वैषयि-कसुखेऽनिष्टत्वप्रतिसन्धानेऽपि मुमुक्षूणां प्रशमप्रभवसुखेऽनिष्टत्वाप्रतिसन्धानात् । न च तदिच्छया वैराग्यव्याहतिः, दुःखद्वेषेऽपि प्रशान्तत्वव्याहतिप्रसङ्गात् । एतेन योगर्द्धिसाध्यनिरतिशयानन्दमयीं जीवन्मुक्तिमुद्दिश्य प्रवृत्तः कारणवशात् परममुक्तिमासादयतीति न युक्तम्, विरक्तानां मोक्षेऽधिकारादिति निरस्तम् । विषय-सुखेच्छाविच्छेदस्यैव वैराग्यपदार्थत्वात् । परमप्रयोजनतया परं परममुक्तिमुद्दिश्यैव प्रवृत्तिरिति तु युक्तः पन्थाः । किञ्च दुःखे द्वेषमात्रादेव यदि तन्नाशानु-कूलः प्रयत्नस्तदा मूर्च्छादावपि प्रवृत्तिः स्यात् । न च जायत एव बहुतरदुःखजर्जरकलेवराणां मरणादौ प्रवृत्तिरिति वाच्यम्, तस्या अविवेकिप्रवृत्ति-त्वात् । पुरुषार्थत्वे विवेकानुपयोग इति चेत् । सत्यम् । नैयायिकपशूनामेव न तदुपयोगो न तु प्रेक्षावतां, यथावत् प्रयोजनं प्रमायैव तत्प्रवृत्तेः, अतः

सुष्ठूक्तम्—दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते ॥ न हि मूर्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीः ॥ १ ॥ इति, दुःखं माभूदित्युद्देश्यैव प्रवृत्ते, दुःखाभाव एव पुरुषार्थत्वज्ञानं त्वन्यथासिद्धमिति चेत्, किमत्र मादृशोर्यो ध्वंसः प्रागभावो वा, आद्ये मूर्छादावपि प्रवृत्त्यापत्तिः, ज्ञानादिज्ञाननिरूपानिष्टानुसन्धाने तत्र प्रवृत्तिप्रतिबन्धे तु मुक्तावपि तथाप्रसङ्गः, अन्त्ये मुक्तावप्रवृत्त्यापत्तिस्तत्र दुःखप्रागभावाभावात् । तयोरेकेन तत्र न प्रवृत्तिरेवेति चेत् । न । इच्छामात्रेणानुभवानपवादात् । एतेन चरमदुःखानुभवेऽनागतदुःखध्वंसोऽपि विषयस्तथाप्रिमक्षणे तद्ध्वंसस्तद्विषयकं च विनश्यदवस्थं ज्ञानमस्तीति वर्तमानोऽप्यनुभूयते इति निरस्तम्, तथा चेष्टताया मूर्छाद्यवस्थायामपि सम्भवात् । तस्मात् दुःखं माभूदितीच्छायां दुःखकारणध्वंसो विषयस्तया च सुखेच्छाधीनया दुःखद्वेषाधीनतत्साधनकर्मद्वेषाधीनया वा कर्मक्षयेच्छया मुमुक्षुप्रवृत्तिरुपपद्यत इति मन्तव्यम्, प्रायश्चित्तस्थले तु द्वेषयोनिरेवोक्तोद्देशेन प्रवृत्तिः, अत एव प्रवृत्तिद्वैविध्यमुपपद्यत इति न किञ्चिदनुपपन्नम् । यत्त्वशरीरं वाव सन्तं प्रियाप्रिये न स्पृशत इति श्रुतेर्मुक्तौ सुखाभावसिद्धिः । न च द्वन्द्वस्यरसान्मिलितसुखदुःखोभयप्रतीतिर्नोक्तार्थानुपातिनी प्रत्येकनिषेधे च वाक्यभेदापत्तिरिति वाच्यम्, द्वित्वेनैकरूपेणोपस्थितयोः प्रत्येकं निषेधान्वये वाक्यभेदाभावात् खदिरौ छिन्धीत्यत्र प्रत्येकं छिदान्वयवदिति, तन्न, घटवति भूतले घटपटौ न स्त इति वाक्यात् घटपटोभयत्वावच्छिन्नाभावबोधवत् तात्पर्यवशात् उक्तश्रुतेरपि मुक्तौ प्रियाप्रियोभयत्वावच्छिन्नाभावस्यैव प्रत्ययात्, अन्यथा—'सुखमात्यन्तिकं यत्र बुद्धिग्राह्यमतीन्द्रियं । तं वै मोक्षं विजानीयात् दुष्प्रापमकृतात्मभिः,' इत्यादिस्मृतिविरोधापत्तेः । न च तत्र सुखशब्द औपचारिकः, बाधकाभावात् । न च शरीरादिकं विना सुखाद्यनुत्पत्तिर्बाधिका, शरीरादेर्जन्यात्मविशेषगुणत्वावच्छिन्नं प्रत्येव हेतुत्वात् तत्र च जन्यत्वस्य ध्वंसप्रतियोगित्वरूपस्येश्वरज्ञानादेरिव मुक्तिकालीनज्ञानसुखादेरपि व्यावृत्तत्वात् । न च तत्र कारणान्तरकल्पने गौरवम्, आगममूलत्वात् । न च जन्यभावस्य सतो ध्वंस आवश्यकः, अभावस्येव भावस्यापि कस्यचिदुत्पन्नस्याप्यविनाशसम्भवात्, जन्यभावत्वेन नाशहेतुत्वे मानाभावात्, नाशकारणानां नाश्यनिष्ठतयैव हेतुतया दोषाभावात्, कालिकसम्बन्धेन घटत्वपटत्वादिप्रत्यक्षजन्यत्वस्य नानात्वात् । किञ्च जन्यभावत्वेन नाशहेतुत्वेऽपि कथं मुक्तौ सुखादिध्वंसस्तस्य प्रतियोगितया योग्यात्मविशेषगुणनाशं प्रति ऐकाधिकरण्यावच्छिन्नस्वपूर्ववृत्तितासम्बन्धेन योग्यविशेषगुणत्वेन हेतुत्वान्मुक्तौ विशेषगुणानुत्पत्त्या पूर्वविशेषगुणनाशायोगात् । न च सुषुप्तिप्राक्कालीनज्ञाननाशे व्यभिचारवारणाय स्वपूर्ववृत्तित्वं स्वाधिकरणक्षणप्राग-

भावाधिकरणक्षणवृत्तित्वं वाच्यमतश्चरमज्ञानसुखादेर्द्वितीयक्षणविशिष्टस्य स्वस्यैव स्वनाशकत्वात् न व्यभिचार इति वाच्यम्, एवं सत्यन्यत्रापि स्वस्यैव स्वनाशकत्वप्रसङ्गात्, अपेक्षाबुद्धेरपि तृतीयक्षणे ध्वंसप्रसङ्गात्, अनन्तक्षणाप्रवेशे लाघवात् स्वप्रागभावाधिकरणक्षणवृत्तित्वरूपस्यैव स्वपूर्ववृत्तित्वस्य सम्बन्धमध्ये निवेशात्, तत्तज्ज्ञानभिन्नत्वस्य नाश्यतावच्छेदककोटौ निवेशात् सुषुप्तौ प्रमाणसिद्धतया ज्ञानसुखादिनाशकान्तरस्वीकारेऽपि मुक्तौ तत्स्वीकारे प्रमाणाभावात्। यत्त्वेतत्क्षणोत्पन्नयोग्यविभुविशेषगुणत्वेन नाश्यता एतत्क्षणोत्तरक्षणवृत्तित्वविशिष्टयोग्यविभुविशेषगुणत्वेन नाशकता, अपेक्षाबुद्धिनाशे द्वित्वप्रत्यक्षे च विशेषसामग्री चरमज्ञानादिकं तूत्तरक्षणवृत्तित्वविशिष्टं स्वमेव स्वस्य नाशकमिति, तन्न, एतत्क्षणावृत्तियोग्यविभुविशेषगुणत्वेनैव नाशकत्वौचित्यात्। यत्त्वात्ममनोयोगादिनाशादेव मुक्तौ ज्ञानसुखादिनाश इति, तन्न; आत्ममनोयोगादिनाशस्य स्वप्रतियोगिजन्यज्ञानसुखादिनाशकत्वे ज्ञानसुखादीनां बहुक्षणावस्थायिताप्रसङ्गेन परस्य सिद्धान्तभङ्गप्रसङ्गात्। ऋजुसूत्रनयावलम्बिनस्त्वाहुरखण्डज्ञानसुखसन्ततिरेव मोक्षः। न च सन्तत्यनुपपत्तिः, पूर्वपूर्वज्ञानक्षणानामुत्तरोत्तरज्ञानोपादानत्वेन तदुपपत्तेः। न च संसारेषु सुषुप्ताद्यवस्थायां ज्ञानादिविच्छेदात् सन्ततिविच्छेदः, तदाप्यव्यक्तज्ञानोपगमात्। न चैवं जाग्रत्सुषुप्त्यवस्थासङ्करः, व्यक्ताव्यक्तज्ञानयोगात् तदसाङ्कर्यात्। सुषुप्तौ सतो ज्ञानादेः कथमनुपलक्षणमिति चेत्, अश्वविकल्पकाले गोदर्शनस्येवेति विभाव्यताम्। न च युगपज्ज्ञानद्वयानभ्युपगमात् तदा तदसम्भवः, सविकल्पकाविकल्पयोर्युगपद्वृत्तेरनुभवात्, अन्यथा यदा मया गौर्दृष्टस्तदाऽश्वो विकल्पित इत्युत्तरकालं प्रतिसन्धानं न स्यात्। ज्ञानादीनां क्षणरूपता च क्षणसत्तया सिद्धा, क्षणसत्तायाः क्षणतादात्म्यनियतत्वात्, क्षणस्वरूपे तथा दर्शनात्, समर्थश्च क्षणः सजातीयक्षणमारभत एव, शरीराद्यपेक्षाकारणानामनियतत्वात् तद्विरहेऽपि मुक्तिकालीनज्ञानाद्युत्पत्त्यविरोधात् विशिष्टदेशकालादेश्चापेक्षाहेतोस्तदाप्यक्षतत्वादिति। सङ्ग्रहनयावलम्बिनस्तु सङ्गिरन्ते—कर्मक्षयाविर्भूतं सुखसंवेदनमेव मुक्तिः, तद्धि जीवस्य स्वभावः सेन्द्रियदेहाद्यपेक्षाकारणस्वरूपावरणेनाच्छाद्यते प्रदीपस्यापवरकावस्थितपदार्थप्रकाशकत्वस्वभाव इव तदावारकशरावादिना, तदपगमे तु प्रदीपस्येव जीवस्यापि विशिष्टप्रकाशस्वभावोऽयत्नसिद्ध एवेति, शरीराभावे ज्ञानाद्यभावोऽप्रेर्य एवान्यथा शरावाद्यभावे प्रदीपादेरभावप्रसङ्गात्। शरावादेः प्रदीपाद्यजनकत्वान्नोक्तप्रसङ्ग इति चेत्। न। तथाभूतप्रदीपपरिणत्यजनकत्वे शरावादेस्तदनावारकत्वप्रसङ्गादिति दिक्। सेयं मुक्तिः स्फटिकनिर्मलाप्रव्याबाधा सिद्धिशिलामुपगतेनात्मना लभ्यते क्षीणकर्मणः स्वभावत एवोर्ध्वगतिमत्त्वेन तत्र गमनात्, परतो धर्मास्तिकायविरहेण



न्याया
लोकः

॥ ३ ॥

गतिमतिचन्मात् । ननु कथमेतत् सङ्गच्छते आत्मनो विभुत्वेन गत्ययोगान्मूर्तद्रव्यत्वेन क्रियासमवायिकारणत्वात्, न चात्मनो विभुत्वमसिद्धम्, सुखाधिकरणं द्रव्यं विभु नित्यत्वे सत्यस्मदाद्युपलभ्यमानगुणाधिष्ठानत्वात् आकाशवदित्यनुमानात् तत्सिद्धेरिति चेत् । न, शरीरनियतपरिमाणतयात्मनः प्रत्यक्षत्वेन पक्षस्य प्रत्यक्षबाधितत्वात्, आत्मैकत्वपरिमाणे न योग्ये इति टीकाकारवचनात् अप्रत्यक्षमात्मपरिमाणमिति चेत् । न । तद्वचनस्य प्रलापमायत्वात् । नन्वेवमात्मनि मूर्तत्वग्रहे तत्र विभुत्वाविभुत्वसंशयो न स्यादिति चेत् । न । तत्र तमस्यालोकाभावत्वग्रहेऽपि भावत्वाभावत्वग्रहे संशयवत् संशयधर्मितावच्छेदकावच्छेदेन तद्ग्रहात् ज्ञानप्रामाण्यसंशयाद्वा तदुपपत्तेः । शब्दगुणत्वप्रतिषेधेन दृष्टान्तस्य साधनवैकल्याच, तथा हि शब्दो द्रव्यं क्रियावत्त्वात् घटवत्, न चासिद्धिः, संहरणवायुवहनद्वारानुपातलेष्टादिप्रतिघातैस्तत्सिद्धेः । यदाह भगवान् भाष्यकारः—'जं ते पोग्गलमइया सकिरिया वायवहणाओ ॥ घूमोव्व संहरणओ द्वाराणुविहाणओ विसेसेणं ॥ थोवं व णिवंवाइसु पडिघायाओ अ वायव्व—त्ति, संहरणादयश्च संयोगविशेषा इति कार्येण कारणानुमानम् । वस्तुत आगतोऽयं शब्द इति प्रत्यक्षादेव शब्दे क्रियावत्त्वसिद्धिः । न च पवनगतैव गतिः स्पर्यमाणा शब्दे आरोप्यते स्वाभाविकगतेरन्यगत्यनुविधानानुपपत्तेरिति वाच्यम्, इन्द्रनीलप्रभागतेरिन्द्रनीलगत्यनुविधानवदुपपत्तेः, अन्यथा श्रोत्रेण शब्दग्रहणं न स्यात् तस्य शब्ददेशेऽगमनात्, गमने वाऽन्तरालवर्तिनामपि शब्दानां ग्रहणप्रसङ्गात्, अनुवातप्रतिवाततिर्यग्वातेषु च प्रतिपत्त्यप्रतिपत्तीपत्प्रतिपत्तिभेदाभावप्रसङ्गाच, तस्य तत्कृतोपकारायोगात् । अथ वीणाकाशसंयोगेन स्वावच्छेदकावच्छेदेन जनितेनाद्यशब्देन दशदिक्षु निमित्तपवनतारतम्ये कदम्बगोलकन्यायेन तारमन्दादिरूपा दश शब्दा आरभ्यन्ते निमित्तपवनातारतम्ये तु दशदिक्षु वीचीतरङ्गन्यायेनैक एव शब्द आरभ्यते एवं तैरपीति श्रोत्रप्राप्तेः सुघटत्वात् नानुपपत्तिरिति चेत्, न, एवं सति वीणादयोऽपि पूर्वपूर्वसमानजातीयक्षणप्रभवा अन्या एव सस्येण सम्बध्यन्त इत्यभ्युपगमस्यापि प्रामाणिकत्वप्रसङ्गात् । प्रत्यभिज्ञानाद्वीणादावेकत्वकल्पनासिद्धेर्नायमुपगमो युक्त इति चेत्, शब्देऽपि प्रत्यभिज्ञानादेकत्वसिद्धिः किं काकेन भक्षिता । स एवायं शब्दो यमुदचीचरत् चैत्र इत्यत्रापि हि प्रत्यभिज्ञानमबाधितमेव । तारमन्दादिभेदेन भेदे ध्रुवे साजात्यमेव प्रत्यभिज्ञाविषय इति चेत्, न, तथापि यत्र नोक्तभेदस्तच्छब्दस्यैकत्वनियमात् श्रोत्रप्राप्तेर्दुर्घटत्वात्, तार एव शब्दो दूरे मन्दो जात इत्यनुभवादेकस्यैव तारमन्दादिपरिणतिभेदाभ्युपगमाच । अपि च श्रोत्रमपि नाकाशं बाधिर्याभावप्रसङ्गात् किन्तु मूर्तमेवेति न तस्य शब्दो गुणः । किञ्च

शब्दस्याकाशगुणत्वे सर्वस्य सर्वशब्दग्रहणापत्तिः श्रोत्रसमवायाविशेषात्, तत्पुरुषीयकर्णशष्कुल्यवच्छिन्नसमवायसम्बन्धावच्छिन्नाधारतायास्तत्पुरुषीयशब्दग्रहं प्रति हेतुत्वे महागौरवात्, द्रव्यत्वे तु संयोगेनैव श्रोत्रेण ग्रहणोपपत्तौ लाघवम् । शब्दस्य मूर्तत्वे तत्साक्षात्कारो न स्याद्विषयतया मूर्तमत्यक्षत्वावच्छिन्नं प्रति समवायेनोद्भूतरूपवत्त्वस्य हेतुत्वादिति चेत् । न । द्रव्यमत्यक्षत्वावच्छिन्नं प्रति योग्यताविशेषस्यैव हेतुत्वात्, स च व्यावृत्तिविशेषः शक्तिविशेषो वेत्यन्यदेतत् । श्रोत्रेन्द्रियव्यवस्थापकत्वेन शब्दस्याम्बरगुणत्वसिद्धिरिति तु मन्दं, इन्द्रियान्तराग्राह्यग्राहकत्वस्यैव भिन्नेन्द्रियत्वव्याप्यत्वात् तत्र गुणप्रवेशस्य गौरवकरत्वात् । इत्थं च श्रोत्रेन्द्रियं द्रव्याग्राहकं रूपस्पर्शाग्राहकबहिरिन्द्रियत्वात् रसनवदिति निरस्तम्, अप्रयोजकत्वात्, द्रव्यग्रहप्रयोजकप्रत्यासत्त्यभिधानेन तद्विरहरूपविपक्षबाधकतर्कानुत्थानात् । इत्थं च शब्दो न पौद्गलिकः स्पर्शशून्याश्रयत्वात्, अतिनिविडप्रदेशप्रवेशनिर्गमयोरप्रतिघातात्, पूर्वं पश्चाच्चावयवानुपलब्धेः, सूक्ष्ममूर्तान्तराप्रेरकत्वात्, गगनगुणत्वाच्चेति हेतवो निरस्ता वेदितव्याः, भाषावर्गणादेस्तदाश्रयस्य स्पर्शवत्त्वेन स्पर्शशून्याश्रयत्वस्यासिद्धेः, भित्त्यादिकमुपभिद्य प्रसर्पिणा मृगमदादिद्रव्येण द्वितीयस्यानैकान्तिकत्वात्, तृतीयचतुर्थयोश्चोल्कादिना धूमादिना च तथात्वात्, पञ्चमासिद्धतायास्तु प्रदर्शितत्वादिति । उच्छृङ्खलनैयायिकास्तु निमित्तपवनस्यैव गुणः शब्दोऽत एव तन्नाशादेव तन्नाशः समवायिकारणनाशस्य समवेतकार्यनाशं प्रति हेतुत्वात्, कर्णसंयुक्तनिमित्तपवनसमवायाच्च तद्ग्रहः । न च वीणावेणुमृदङ्गादेरेव कुतो नायं गुण इति वाच्यम्, तेषामननुगतत्वात् निमित्तपवनस्यैवानुगतत्वेन तत्समवायिकारणत्वौचित्यात् अन्येषां निमित्तकारणत्वे क्लृप्तेऽपि समवायिकारणत्वाकल्पनात् सम्बन्धभेदेन कारणताभेदादित्याहुः, तदसत्—पवनगुणत्वे शब्दस्य तत्स्पर्शस्येव स्पार्शनप्रसङ्गात् तस्य स्पार्शनप्रतिबन्धकत्वकल्पने च गौरवात् । शब्दे गुणस्पार्शनजनकतावच्छेदकजात्यभावात् न दोष इति चेत्, न, तादृशजातेरसिद्धेर्गुणचाक्षुषजनकतावच्छेदिकया साङ्कर्यादिति दिग्, अधिकं मत्कृतस्याद्वादरहस्यज्ञानार्णवयोरनुसन्धेयम् । महत्त्वाल्पत्वसंबन्धाच्च शब्दो द्रव्यम् । न च तीव्रत्वमन्दत्वाभ्यां तदुपपत्तिः, शब्दगुणत्वासिद्ध्या तयोर्गुणगतजातित्वासिद्धेः । इयत्तानवधारणेऽपि परिमाणावधारणं च वायाविव न विरुद्धम्, मन्दतीव्रताभिसम्बन्धादल्पमहत्त्वप्रत्ययसम्भवे च मन्दतीव्रवाहिनोर्गङ्गागिरिसरिन्नीरयोरल्पमहत्त्वप्रसङ्गात् । कारणगताल्पत्वमहत्त्वयोः शब्दे उपचार इत्यपि वैलक्ष्यभाषितं, घटादावपि तथाप्रसङ्गात् । एकादिसङ्ख्यासम्बन्धित्वाच्च गुणवत्त्वम्, आधारगतसङ्ख्यायास्तत्रोपचारे निगमादेकत्वमेव प्रतीयेत, कारणगतसङ्ख्योपचारे च बहुत्वमेव ज्ञायेत, यथाविरोधं



न्याया
लोकः

॥ ४ ॥

सादृश्योपचार इति वाच्यमविरताम्, अयं सादृश्यावगमेऽयाविरोधादिति, अन्द्रगुणत्वासिद्धेः सिद्धं साधनवैकल्यं दृष्टान्तस्य । एतेनेदमपि प्रत्युक्तं—ज्ञानं परममह-त्त्वोपेतद्रव्यसमवेतं विशेषगुणत्वे सति महदाश्रितत्वाच्छब्दवदिति । यदप्युक्तं स्वाश्रयसंयुक्ते आश्रयान्तरे कर्मारम्भे एकद्रव्यत्वे सति क्रियाहेतुगुणत्वात् वेग-वदित्यनुमानादात्मविभुत्वसिद्धिरिति, तदपि न, स्वाश्रयसंयोगघटितसम्बन्धेनादृष्टस्यात्मवर्त्तिनो द्वीपान्तरवर्त्तिमुक्ताफलाद्याकर्षणहेतुत्वेऽतिप्रसङ्गाद्धेत्वसिद्धेः । तत्र-स्थस्यैवान्यत्रस्थितोपसर्पणहेतुत्वस्य प्रासप्रयत्नादावदर्शनादात्मस्थितशरासनाभ्यासनप्रयत्ने दूरस्थितलक्ष्यप्राप्तिक्रियाहेतावतथादर्शने च विचित्रशक्तिकत्वात् भा-वानाम्, अदृष्टस्य स्वाश्रयसंयोगं विनापि कार्यहेतुत्वात् न साध्यसिद्धिः, अयस्कान्तभ्रामकस्पर्शगुणेन व्यभिचारश्च । न च तत्स्पर्शस्य न लोहाकर्षणहेतुत्वमन्य-थासिद्धत्वादिति वाच्यम्, तदुत्कर्षेण क्रियोत्कर्षात् तस्य तद्धेतुत्वात् । एतेनादृष्टमेवायस्कान्तेनाकृष्यमाणलोहदर्शने सुखवत्पुंसो निरवकल्पत्वेन तत्क्रियाहेतुरिति परास्तम्, दृष्टेनोपपत्तावदृष्टकल्पनाया अन्याय्यत्वात्, अन्यथान्यत्रापि तद्धेतुत्वप्रसङ्गात् । यदपि शत्रुजिघांसया कृतेन श्येनयागेन यज्वन्येवादृष्टजननात् तस्य च समानसम्बन्धात् कथमात्मविभुत्वं विना फलोपपत्तिरिति, तदपि न, शक्तिविशेषरूपस्य कारणत्वस्यासम्बन्धेऽप्यविरोधात्, सम्बन्धघटितत्वे वा तस्य मृतो सम्बन्धविशेषकल्पनावश्यकत्वादिति । अथात्मनो महत्त्वे तावद्भिर्विवादे द्रव्यचाक्षुषं प्रति कल्पनीयहेतुभावस्य महत्त्वस्य लाघवेन मन्यद्रव्यसाक्षात्कार-सामान्ये प्रत्येव हेतुत्वकल्पनादात्मसाक्षात्कारनिर्वाहायात्मनि महत्त्वस्यावश्यकत्वात्, तच्च महत्त्वं न जन्यं, कार्यं हि महत्त्वमवयवबहुत्वजन्यं स्यात् तन्मह-त्त्वजन्यं वा प्रचयजन्यं वा न च त्रितयमपि निरवयवस्यात्मनः सम्भवतीति, एवं चायं प्रयोगः आत्मा विभुर्नित्यमहत्त्वादाकाशवदिति चेत्; अत्रोच्यते—अत्र हि परमपकृष्टपरिमाणवत्त्वलक्षणं विभुत्वं साध्यते, न च नित्यमहत्त्वे सत्यपि परमप्रकर्षविपर्यये बाधके कश्चिदर्क इत्यप्रयोजकोऽयं हेतुः । अपकृष्टत्वे तस्य तत्त्वस्य निर्वाहिका गगनमहत्त्वावधिकापकर्षस्य बहुत्वजन्यतावच्छेदकत्वादिति चेत्, न, परमाणुपरिमाणसाधारणतया तस्य कार्यतानवच्छेदकत्वात्; त्रुटिम-हत्त्वादिनिष्ठेनोत्कर्षेण समं साङ्कर्यात् तादृशापकर्षस्य जातित्वासिद्धेश्च, परमाणुपरिमाणानभ्युपगमे च गगनपरिमाणानभ्युपगमेऽपि किं ह्रसिमाबाधकमिति । उत्काप-कर्षेण कल्पनायां परमाणुपरिमाणव्यावृत्तत्वमपि दीयत इति चेत्, आत्मपरिमाणव्यावृत्तत्वस्यापि तत्र दाने किं तव गृहभङ्गः, उभयाभावनिवेशे हि न कमपि दोषं पश्यामः । वस्तुत आत्मपरिमाणपरिणतिविशेषे शरीरनामकर्मणो हेतुत्वात् तस्य नित्यत्वासिद्ध्या स्वरूपासिद्धो हेतुः । नन्वेवं शरीरपरिमाणमेवात्म-

परिमाणभेदादात्मभेदापत्तिः परिमाणभेदे द्रव्यभेदनियमादिति चेत्, न, एकत्र घटे श्यामरक्तादिरूपभेदेऽपि घटाभेदवत्परिमाणभेदेऽपि आत्माभेदोपपत्तेः, विशिष्टभेदस्य च शुद्धद्रव्याभेदापरिपन्थित्वात् न दोषः । इत्थमेव च क्षणभेदसमर्थनं सङ्गच्छते । नन्वेवं बालयुवशरीरादेरिवात्मन उत्पत्तिः स्यादिति चेत्, स्वाधिकरणक्षणध्वंसानाधिकरणक्षणसम्बन्धरूपा पर्यायनियता सा न भवत्येव, विशिष्टस्वाधिकरणक्षणध्वंसानधिकरणक्षणसम्बन्धरूपा तु सा द्रव्येऽपि सम्भविसम्भवा न निषिद्ध्यत इति किमधिकं पर्यनुयुज्यते । अत एव तद्वदेवात्मनः सावयत्वेन कार्यत्वापत्तिरिति निरस्ता । प्रागसतः सत्तालाभरूपस्य कार्यत्वस्यासिद्धेः, पूर्वाकारपरित्यागेनोत्तराकारोपादानरूपस्य च तस्यात्मन्यप्यविरोधात् । न च सावयवत्वे तस्य प्राक्प्रसिद्धसमानजातीयावयवारभ्यत्वप्रसक्तिरिति वाच्यम्, तथाव्याप्त्यसिद्धेर्घटादिना व्यभिचारात्, घटादिर्हि सावयवोऽपि न तन्तुवत्प्राक्सिद्धसमानजातीयकपालसंयोगपूर्वकः, मृत्पिण्डात्प्रथममेव स्वावयवरूपाद्यात्मनः प्रादुर्भावात् । सावयवत्वे आत्मनो नाशः स्यात् घटवदिति चेत्, स्यादेव, संसार्यवस्थानाशेन तद्रूपतया तस्यापि नष्टत्वात् सर्वथा नाशस्य च घटेऽप्यसिद्धेः । एकान्तेनासतश्चात्मन उत्पत्तौ स्तनादौ प्रवृत्तिर्न स्यात् तस्या इष्टसाधनतास्मृत्यधीनत्वात् तस्याश्च पूर्वभवानुभवाधीनत्वात् । यत्तु प्रागवयवेषु क्रिया ततो विभागः ततः पूर्वसंयोगविनाशस्ततो द्रव्यनाश इति प्रक्रिययात्मनाशः स्यादिति परस्याकूतं, तन्न, तथाविनाशे पूर्वजन्मनि स्मरणाद्यभावप्रसङ्गात् । न चायमेकान्तोऽवयवक्रियादिकं विनैव सुवर्णकारव्यापारात्कटकस्य केयूरीभावे कटकध्वंसप्रतीतेः । एवं च मूर्त्तशरीरानुप्रवेशेनात्मनो मूर्त्तत्वापत्तिरपि परास्ता । यतः किमिदं मूर्त्तत्वम् इयत्तावच्छिन्नपरिमाणयोगो रूपादिसन्निवेशो वा । आद्ये इष्टापत्तिः । न ह्यविभुद्रव्यस्य मूर्त्तत्वं न मन्यते कश्चिद्विपश्चित्, नान्त्यः, मूर्त्तानुप्रवेशिनो रूपादिमत्त्वव्याप्तिविरहान्मनस्येव व्यभिचारात् । न च मूर्त्तमहत्त्वेनापि तद्व्याप्तिरस्ति अप्रयोजकत्वात् । एवमात्मनो मूर्त्तद्रव्यत्वेऽचेतनत्वापत्तिरपि परास्ता । सहचारदर्शनमात्रेण व्याप्त्यग्रहात्, अन्यथा विभुत्वेऽप्याकाशादिवत्तथात्वं स्यात् । शरीरखण्डने शरीरव्यापिनो जन्तोरपि खण्डनप्रसङ्ग इत्यप्यसमीक्षिताभिधानं, शरीरखण्डने कथञ्चित् तत्खण्डनस्येष्टत्वात्, शरीरसम्बद्धात्मप्रदेशेभ्यो हि कतिपयात्मप्रदेशानां खण्डितशरीरानुप्रवेश आत्मनः खण्डनं तन्मात्र विद्यत एवान्यथा खण्डितशरीरप्रदेशस्य कम्पोपलब्धिर्न स्यात्, आत्मविभुत्ववादेऽपि खण्डितशरीरे मनोन्तरप्रवेशनिर्गमयोरुपगमात्राधिककल्पनमिति दिक् । आत्मविभुत्ववादे ज्ञानादीनामव्याप्यवृत्तित्वात्, घटादाववच्छेदकतासम्बन्धेन ज्ञानाद्यभावस्यापादकस्य सत्त्वात् तत्रावच्छेदकतया ज्ञानाद्युत्पत्तिवारणायावच्छेदकतया तदात्मविशेषगुणत्वाव-

चिन्त्यं प्रति तारतम्येन तच्छरीरत्वादिनाऽनन्तकार्यकारणभावकल्पने गौरवं, देहव्यापित्वपक्षे तु तेषां व्याप्यवृत्तित्वामोक्तगौरवम् । न च देशव्यपेतेषु ज्ञानादेः क्रमेण सर्वदेशसञ्चारात् सर्वत्रोपलब्धिरित्यपि सम्यक्, युगपत् तत्र सर्वत्र ज्ञानसुखाद्युपलम्भात् । न चाशुवृत्तेर्यौगपद्याभिमानः, अन्यत्रापि तथा प्रसक्तेः, शक्यं हि वक्तुं घटादिरप्येकावयवसञ्चिराशुवृत्तेर्युगपत्सर्वेष्ववयवेषु प्रतीयत इति । अत एव सौगतोऽपि तथैकं निरन्तरं ज्ञानं कल्पयन्निरस्तः, प्रत्यवयवमनेकसुखादिकल्पने सन्तानान्तरवत् परस्परमसङ्क्रमात् सर्वत्र शरीरे मम सुखमित्यनुस्यूतैकप्रत्ययविलोपात् । युगपज्जातिभिरेकशरीरवर्तिभिरनेकनिरंशक्षणिकसुखसंवेदनैरेकपरामर्शविकल्पजननादयमदोष इति चेत्, तर्हि, अनेकोपादानस्य परामर्शविकल्पस्यैकत्वसम्भवे चार्वाकाभिमतैकशरीरव्यपदेशभागनेकपरमाणूपादानानेकविज्ञानभावेऽपि तद्विकल्पसम्भवात् अनेकपरमाणूपादानमनेकं चेत् विज्ञानं सन्तानान्तरवदेकपरामर्शाभाव इति धर्मकीर्तेर्भाषितं न सुभाषितं स्यात् । एवं च ज्ञानादीनां ज्ञानाद्यभावविरोधस्याप्यवच्छेदकगर्भस्यैव कल्पनाल्लाघवम् । अथ योजनमात्रमहं गत इति प्रतीतेरात्मनः क्रियावत्त्वेन मूर्तत्वसिद्धेर्न विभुत्वं, न च मनः शरीरं वा तद्व्यवहारविषयः, तस्याहंप्रत्ययावेद्यत्वादित्यप्याहुः । आत्मनः शरीरव्यापित्वे चेदं मानम्—आत्मा शरीरमानः शरीरव्यापित्वेनोपलभ्यमानगुणवत्त्वादिति । न च मूलावच्छेदेन प्रतीयमानकपिसंयोगादिमतो महीरुहस्य मूलमात्रप्रमाणकत्वाभावेन व्यभिचारः, कपिसंयोगस्य मूल एव वृत्तेः, वृक्षे तु परम्परयैव प्रतीतेः, संयोगगुणत्वनिषेधाच्चेत्यधिकं मत्कृतज्ञानार्णवस्याद्वादरहस्ययोरनुसन्धेयम् । नन्वात्मैव नास्ति तद्ग्राहकप्रमाणाभावात् प्रत्यक्षस्य तथाप्रसरादनुमानागमयोश्चाप्रमाणत्वादिति कस्य मोक्षः । न चैतद्वाक्यप्रामाण्याप्रामाण्ययोर्व्याघातः, एतस्य प्रमाकरणत्वरूपप्रामाण्याभावेऽपि भ्रमजनकत्वाभावेन विषयाबाधात् । न च भवतोऽपि तत्प्रतिक्षेपकप्रमाणाभावात् तूष्णीम्भावः श्रेयानिति वाच्यम्, तद्विपर्ययसाधकमानाभावेऽपि पराभ्युपगते पर्यनुयोगस्य सुकरत्वात् तस्य सन्देहजिज्ञासादिमूलत्वात् तदनुत्तरे परस्य निग्रहात् अत एव सर्वत्र पर्यनुयोगपराण्येव सूत्राणि बृहस्पतेरिति चार्वाकैरभिहितमिति चेत्, न, अनुमानागमाभ्यामात्मसिद्धेः, न त्वनुमानमप्रमाणं, धूमादिज्ञानेन वह्न्यादिकमप्रमाय प्रवृत्त्यनुपपत्तेः । सम्भावनयैव च तत्र प्रवृत्तिः संवादेन च तत्र प्रामाण्याभिमानमिति चेत्, न, अगृहीतासंसर्गकस्वरूपादिस्मृतिरूपायां सम्भावनायामसद्विषयिण्यां परमार्थसत्स्वलक्षणविषयाध्यक्षविषयविषयकत्वरूपसंवादायोगात् । अथोक्तसंवादाभिमानादध्यक्षमूलकविकल्पविषयविषयकत्वरूपसंवादादेव वा तत्र प्रामाण्याभिमान इति चेत्, न, संवादाभिमानोऽपि तद्भिन्नाभिमानादित्याद्यनवस्थानादनु-

पदोक्तसंवादस्य च सद्विषयकत्वरूपप्रामाण्यासहचारात् । अध्यक्षमूलकविषयविषयकत्वरूपसंवादस्याध्यक्षमूलकाध्यक्षान्तरसाधारणस्योक्तप्रामाण्यरूपसहचारोऽप्यक्षत इति चेत्, न, तथापि दृष्टसाधर्म्येणानुमानप्रामाण्यसाधनस्यानुमानप्रामाण्यानभ्युपगमे दुःसमाधानत्वात् । अथागृहीतासंसर्गकार्थस्मृतिरूपोत्कटकोटिकसंशयरूपा वा सम्भावनैव संस्कारोद्बोधकेन साधारणधर्मदर्शनरूपेण वा लिङ्गदर्शनेन जनिता अनुमितिकार्यकारिणी सम्भावनाया एव बहुशो व्यवहारहेतुत्वादिति चेत्, न, अप्रमाणेनार्थासिद्धेः, प्रामाण्यसंशयस्य च प्रवृत्त्यप्रतिबन्धकत्वात् स्वतः प्रामाण्यग्रहे तत्संशयायोगाच्च । न च निर्विकल्पके प्रामाण्यं न सन्दिह्यत एव किन्तूत्तरकालभाविन्यनुगताकारावगाहिनि सविकल्पक एव, तत्र प्रमाणाभावेन स्वतः प्रामाण्यग्रहायोगादिति वाच्यम्, सामान्यस्य सत्त्वव्यवस्थापनेन सविकल्पकस्यापि सद्विषयत्वात् । किञ्चानुमितेः सम्भावनारूपत्वे स्मरामि सन्देह्मीति वानुव्यवसायः स्यात् न त्वनुमिनोमीति । स्मृत्यादावसत्ख्यात्युपनीतानुमितित्वाभिमानात् तथानुव्यवसाय इति चेत्, तर्हि साक्षात्करोमीतिधियोऽनभिमानत्वे का प्रत्याशा, न च त्वन्मते प्रत्यक्षस्यापि प्रमाणत्वं युक्तम्, स्वरूपव्यवस्थापकधर्मस्य तल्लक्षणत्वात्, स च धर्मोऽविसंवादित्वस्वरूपस्तस्य च प्रत्यक्षप्रामाण्येन गृहीताविनाभावस्यैव तद्व्यवस्थापकत्वं, सहचारमात्रस्याव्यवस्थापकत्वात्, अन्यथा पार्थिवत्वस्य लोहलेख्यत्वव्यवस्थापकत्वप्रसङ्गात्, अविनाभावग्रहप्रकारस्य सौलभ्ये च सिद्धमनुमानेन, विभिन्नप्रमाकरणत्वेन तस्य प्रमाणान्तरत्वात् । प्रत्यक्षेऽपि प्रामाण्यसम्भावनायां च समुच्छिन्ना तद्विनिश्चयकथा, सन्मात्रालम्बनस्वविषयप्रामाण्यावगाहिनिर्विकल्पस्य स्वप्नेऽप्यप्रतीतेः । यत्तु प्रत्यक्षस्यापि तान्त्रिकलक्षणलक्षितस्यैव लोकसंव्यवहारचतुरस्य प्रामाण्यं नातथाभूतस्यात एवानुमानमपि तान्त्रिकलक्षणलक्षितमेवाप्रमाणत्वेन प्रतिपाद्यते न गोपालाद्यनलप्रतिपत्तिरूपमिति, तदसत्, तस्यापि वस्तुतस्तान्त्रिकलक्षणलक्षितत्वादित्यनुमानं प्रमाणमेवमागमोऽपि । यदप्युक्तं पर्यनुयोगमात्रं क्रियत इति, तत्र पर्यनुयोगोऽप्यप्रमाणमूलकः कथं परं प्रति कर्त्तव्यः । अथ परस्यातिप्रसङ्गापादनरूपपर्यनुयोगे न दूषणमिति चेत्, न, तस्यापि व्याप्तिमूलत्वात् तत्प्रामाण्ये अनुमानप्रामाण्यापातात् । अनुमानं चात्मनि—ज्ञानादयो द्रव्याश्रिताः गुणत्वाद्रूपवदिति । न च भूतान्येव चैतन्योपादानानि, प्रत्येकं तेषु सत्त्वकठिनत्वादिवत्तदुपलम्भप्रसङ्गात् । शक्तिरूपेण प्रत्येकं भूतेषु सत्येव चेतना नोपलभ्यत इति चेत्, नन्वियं शक्तिश्चेतनातो भिन्नाऽभिन्ना वा, आद्ये, चेतनाशक्त्योरसम्बन्धः, प्रत्येकं भूतानां तच्छक्तियोगित्वेऽपि चेतनायोगानुपपत्तिश्च । अन्त्ये शरीर इव तत्र तदुपलम्भप्रसङ्गः । अनभिव्यक्तत्वात् तदनुपलम्भ इति चेत्, ननु केयमनभिव्यक्तिः ।

अनुपलब्धिर्वावरणं वा, आद्येऽनुपलब्ध्यानुपलब्धिरित्यनुत्तरम्, अन्त्ये चावरणं स्वज्ञानप्रतिबन्धकसम्बन्ध इति तादृशातिरिक्तपदार्थाभ्युपगमे तत्त्वसङ्ख्याविरोधः।
न च भूतस्वरूपं तेषामन्यतरदेव वावरणं, व्यञ्जकत्वावरणत्वयोर्विरोधेन तत्त्वेनाभिमतानां भूतानामावरणत्वायोगात्। विशिष्टपरिणामाभावात्प्रत्येकं भूतेषु चैतन्या-
वरणानेति बालजल्पितम्, तथा सति परिणामस्यैव व्यञ्जकत्वप्रसङ्गात्, परिणामस्य भूताभेदे सदा तदभिव्यक्तिप्रसङ्गात्तद्भेदे च तत्त्वसङ्ख्याविरोधात्। परि-
णामान्यकाले भूताभिन्न इति तु कालानभ्युपगमादनुक्तिसम्भवं, लोकसिद्धतदाश्रयणे तु लोकसिद्धस्यात्मनोऽप्याश्रयणप्रसङ्गात्। न च तस्य न लोकसि-
द्धत्वं, जातिस्मरणविस्मयदर्शनपितृकर्म्मादिना तस्य तथात्वात्। भूतसङ्घातमेतेनोत्पद्यत इत्यपि न समीचीनं, प्रत्येकमसतः समुदायादप्यनुत्पादाद्रेणुतैलवत्।
अम्यादावसतोऽपि स्थूलत्वस्य घटादावुत्पादान्नोक्तसङ्गतिरिति चेत्, न, उपादानेऽसतः कार्यस्योत्पत्तौ पञ्चमभूतस्याप्युत्पत्तिप्रसङ्गात्। हेतोरसदजननस्वभा-
वत्वात् न तदुत्पत्तिरिति चेत्, तर्हि लाघवात् असदजननस्वभावत्वमेव तत्र कल्प्यताम्। तथात्वेऽपि क्वचित्कस्यचिज्जननस्वभाव इति नातिप्रसङ्ग इति
चेत्, न, अननुगमात्, सज्जननस्वभावस्यानुगतस्यैव कल्पयितुं युक्तत्वात्। किञ्च पूर्वापरादिदेशमनष्टस्याव्यवस्थिताः परमाणव एव स्थूलत्वमिति तेषामेव तथाभा-
वाच्च तथात्वं स्थूलत्वस्य। न चैवं भूतसङ्घात एव चैतन्यं, घटादावपि तत्प्रसङ्गात्। भिन्नस्वभावानामेव भूतानां चैतन्योपादानत्वात् तत्सङ्घात एव
चैतन्यं, न च सर्वभूतोपादानत्वं क्वाप्यसिद्धं, बहुत्वसङ्ख्यायामेव तत्प्रसिद्धेरिति चेत्, न, भूतत्वाविशेषे भेदकाभावेन स्वभावाभेदात्। चैतन्यजनकानां तद्-
जनकभूतेभ्यः स्वरूपेणैव भेद इति चेत्, तर्हि भूतेतरात्मकभेदप्रसङ्गो भूतस्य भूतस्वरूपाभेदात्, तथा चैषामन्यभूतेभ्य आत्मोपगृहीतत्वेनैव भेदादतिरिक्तात्म-
सिद्धिः। न च हरिद्रुकणिकादिद्रव्यसङ्घातजानामपि स्वादकानां यथा भिन्नस्वभावता तथा भूतानामपि मिथः सेति वाच्यं, व्यक्तिमात्रत एव तेषां
रसवीर्यविपाकादिभेदो न स्वभावभेदादित्युपगमात्। तदात्मकमात्रत्वे संस्थानादिभेदो यथा स्वादकानां तथा चेतनाचेतनत्वभेदोऽपि भूतानां भविष्यतीति
चेत्, न, तत्र कर्म्मादेर्नियामकत्वात् अत्र तदभावात्। भूतसामान्यस्याभूतव्यावृत्तिपञ्चभूतविशेषे तदतिरिक्तव्यावृत्तिरूपभेदसम्भव इति चेत्, न, विवक्षितवि-
शेषव्यतिरेकेण तादृशभेदस्य मिथोऽपि सम्भवात्, अतद्व्यावृत्तेस्तुच्छत्वे वस्तुतो भेदाभावेन विश्वैकरूप्यप्रसङ्गात् स्वरूपस्य च सर्वभावविशेषादिति दिग्। चैत-
न्यस्य देहधर्मत्वे च मृतदेहेऽपि तदुपलम्भप्रसङ्गः, न च लावण्यादिवदुपपत्तिः, तेषां मृतदेहेऽपि सत्त्वात्, अन्यथा तस्य तन्मात्रहेतुकत्वेन चैतन्यवद्देहातिरिक्त-

हेत्वपेक्षणेऽनायासादात्मसिद्धेः । न च तदा प्राणाभावात्तदभावः, नलिकादिना पवनसञ्चारेऽपि चैतन्यानुपलम्भात् । स वायुर्न प्राण इति चेत्, न, तत्र प्राणत्वजातेरभावात् । किञ्च देहस्य चेतनत्वे तस्य प्रतिदिनमन्यान्यभावे पूर्वदिनानुभूतस्योत्तरदिने स्मरणं न स्यात् अन्यदृष्टस्यान्येनास्मरणात् । एकचैतन्यसन्ताने वासनाफलयोरुपपत्तेर्न दोष इति चेत्, न, आद्यसुतचैतन्यस्य चैतन्यानुपादानत्वात् । मातृचैतन्यं तदुपादानमिति चेत्, तर्हि मात्रनुभूतस्य भ्रूणेन स्मरणप्रसङ्गो मातृचैतन्यसंसर्गस्य चैतन्योत्पादकत्वे तत्संलग्नघटादावपि तदुत्पत्तिप्रसङ्गात्, स्वेदजाद्येषु मात्रभावेन तदनुत्पादप्रसङ्गाच्च । एतेन प्रदीपदृष्टान्तः परास्तः, दार्ष्टान्तिकवैधर्म्यात् । तस्माद् यदेकं चैतन्योपादानं स एवात्मा । अथ यथा वृश्चिकस्य गोमयवृश्चिकप्रभवत्वं तथा ज्ञानस्याभ्यासरसायनमातापितृशुक्रशोणितादिनानाहेतुप्रभवत्वमुपपत्स्यत इति चेत्, न, रसायनादिस्थलेऽपि समानजातीयपूर्वाभ्याससम्भवात्, अन्यथा समानेऽपि रसायनाद्युपयोगे यमजयोः प्रज्ञामेधादिविशेषो न स्यात् । तस्मात् प्रज्ञादीनां जन्मादौ न विशेषः शालूकगोमयजन्ययोस्तु शालूकयोर्मिथो विशेषदर्शनादेव विचित्रहेतुप्रभवत्वमिति न किञ्चिदनुपपन्नम् । यत्तु शरीरवृद्ध्या चैतन्यवृद्धेश्चैतन्यं शरीरोपादानमिति, तन्न, महाकायस्यापि मातङ्गाजगरादेरल्पचेतनत्वात् । शरीरविकाराच्चैतन्यविकारोपलम्भात् तस्य तद्धर्मत्वमित्यप्यनुद्घोष्यम्, सात्त्विकानामन्यगतचित्तानां वा शरीरच्छेदेऽपि चैतन्यविकारानुपलम्भात्, सहकारिविशेषादपि कार्यविशेषदर्शनाच्च । करचरणादियावदवयवोपादेयत्वे च चैतन्यस्य कराद्यपगमेऽपगमप्रसङ्गात् यत्किञ्चिदाश्रयापगम इव बहुत्वसङ्ख्यायाः, तावदाश्रयनाशनाश्यत्वे च मृतदेहसत्त्वे तदनाशप्रसङ्गात्, एतेन करचरणाद्यवयवेषु प्रत्येकमेव विश्रान्तं चैतन्यमित्यपि निरस्तम्, एकत्वावमर्शविलोपप्रसङ्गाच्च । घटीयपाकजरूपादीनामिव देहधर्माणामपि ज्ञानादीनां निमित्तनाशनाश्यत्वान्नानुपपत्तिरिति चेत्, किं तर्हि तन्निमित्तं यन्नाशाज्ज्ञानादिनाशः, न तावत्प्राण एव, तत्सत्त्वेऽपि सुषुप्तौ ज्ञानादिनाशात् । न च यद्विरहात्तदा न ज्ञानाद्युत्पत्तिस्तदेव तादृशमनुगतं तन्निमित्तमिति वाच्यम्, तादृशस्योपयोगस्य प्रसाधितत्वेनात्माभ्युपगमप्रसङ्गात् । अपि चाहंप्रत्ययप्रत्यक्षादेव सिद्ध्यत्यात्मा । न चायं प्रत्ययो लिङ्गजः शब्दजो वा, तद्व्यापारविरहे जायमानत्वात् । न च सविकल्पकत्वादप्रमाणं, सम्यगर्थनिर्णयरूपत्वेन तस्यैव प्रामाण्यव्यवस्थापनात् । न चास्य प्रत्यक्षस्येन्द्रियाजन्यत्वादप्रत्यक्षत्वं, बाह्येन्द्रियव्यापारविगमेऽपि स्पष्टताजीवातुकतादृशस्वसंवेदनप्रत्यक्षोपगमात्, तद्व्यापारेऽपि च घटमहंजानामीत्याकारकज्ञाने तद्विषयत्वं तत्र कर्तृतयात्मनः कर्मतया विष-

यदा क्रियात्वेन, च ज्ञानस्य भानात् । न च शरीरस्यैवाथ ज्ञातृतया प्रतिभासः, ज्ञातुर्बहिरिन्द्रियसन्निकर्षनियम्यविषयताविशेषानाश्रयत्वात् शरीरस्य चातथाभूतत्वात्, अन्यथान्धकारे शरीराप्रतिसन्धानेऽहमिति प्रतिसन्धानं न स्यात् । यत्तु ज्ञानकर्मतया घटादिवच्छरीरस्य न ज्ञातृत्वमिति सम्मतिटीकाकृताभिहितं, तन्न, स्वकर्मत्वानुपरक्तज्ञानाविषयत्वमर्थोऽन्यथा मामहं जानामीत्यात्मनोऽपि कर्मत्वादज्ञातृत्वापत्तेः । ननु कृशोऽहं गौरोऽहमित्यादिप्रत्ययानां देहधर्मैः सहाहंकारस्य सामानाधिकरण्यप्रकारेण देहस्यैवाहंप्रत्ययविषयत्वं युक्तमिति चेत्, न, सुख्यहं दुःख्यहमित्यादिप्रतीतेरहन्त्वस्य सुखादिसामानाधिकरण्यावसायात् । न चाद्या प्रमात्वं, बाधकाभावात्, शरीरे त्विदन्त्वप्रतीतेर्बाधिकायाः सत्त्वादहमिति प्रतीतेर्भ्रमत्वं, तादृशवाक्ये त्वहमितिपदस्य मदुपकारित्वमर्थः, यथा स्वकार्यकारिणि योऽयं सोऽहमिति, ममायमात्मेति तु न प्रत्ययः केवलं याच्छिकशब्दमात्रमेव, शरीरेऽपि ममेदमिति शब्दमात्रमेवेति चेत्, न, इदमित्याकारकविषयतायाश्चक्षुरादिव्यापारनियम्यायाः शरीरचाक्षुषत्वापादनाभावात् । किञ्च बालशरीरचपलत्वादीनां युवशरीरे सञ्चारादाद्यशरीरधर्मसंक्रमस्य स्वसन्तानवर्तिपूर्वशरीराधीनतया तादृशस्यानुगतस्य कार्मणशरीरस्य तत्सञ्चारितधर्मवदात्मनः सिद्धिः । एगे आयापुब्बि दुच्चिण्णाणं दुप्पडिकंताणं कडाणं कम्माणमित्यादिक आगमोऽपि विचित्रकर्मभोक्तुरात्मनः सत्तां व्यवस्थापयतीति सर्वमवदातम् ॥ चार्वाकमतानुयायिन एकदेशिनैयायिकास्तु—अवच्छेदकतया ज्ञानादिकं प्रति तादात्म्येन कल्प्यकारणतावच्छेदकस्य शरीरस्यैव समवायेन ज्ञानादिकं प्रति हेतुत्वकल्पनमुचितम्, न चैवमात्मत्वं जातिर्न स्यात् पृथिवीत्वादिना साङ्कर्यादिति वाच्यम्, तथापि साङ्कर्यस्येव जातिसाङ्कर्यस्याप्यदोषत्वात् । न च तथापि भूतचतुष्कप्रकृतित्वेन शरीरस्य पृथिव्यादिभिन्नत्वात् पृथिव्यादिचतुष्टयमेव तत्त्वमिति प्रतिज्ञासंन्यास इति वाच्यम्, स्वाश्रयसमवेतत्वसम्बन्धेन गन्धाभावस्य गन्धं प्रति प्रतिबन्धकत्वेन तस्य भूतचतुष्कप्रकृतित्वायोगात्पार्थिवादिशरीरे जलादिधर्मस्यौपाधिकत्वादिति । न चैवं परात्मरूपस्पर्शादीनामिव तत्समवेतज्ञानादीनामपि चाक्षुषस्पार्शने स्यातामिति वाच्यम्, रूपादिषु जातिविशेषमभ्युपगम्य रूपान्यतमत्वेन चाक्षुषं प्रति स्पर्शान्यतमत्वेन च स्पार्शनं प्रति प्रतिबन्धकत्वकल्पनात्, इत्थमेव रसादीनामचाक्षुषास्पार्शनत्वनिर्वाहात् । अथैवं स्वज्ञानादेरपि कथं प्रत्यक्षमिति चेत्, मनसैवेत्यवेहि । मनःसिद्धौ किं मानमिति चेत्, अनुमानमेव । न चानुमानोपगमेऽपसिद्धान्तः, अनुमितित्वस्य मानसत्वव्याप्यत्वाभ्युपगमात् । न च शरीरस्यात्मत्वे मृतकलेवरेऽपि ज्ञानोत्पत्तिः स्यात्, विजातीयमनःसंयोगाभावात् । आत्मनः शरीरानतिरेके संयोगस्य

पृथक्प्रत्यासत्तित्वाकल्पनेन लाघवम् । न च त्र्यणुकपरमाणुरूपाद्यप्रत्यक्षत्वाय चक्षुःसंयुक्तमहदुद्भूतरूपवत्समवायत्वादिना प्रत्यासत्तित्वे त्रुटिग्रहार्थं संयोगस्य प्रत्यासत्तित्वमावश्यकमिति वाच्यम्, द्रव्यतत्समवेतप्रत्यक्षे उद्भूतरूपमहत्त्वयोः समवायसामानाधिकरण्याभ्यां स्वातन्त्र्येण हेतुत्वे दोषाभावात्, किञ्चैवमुद्भूतरूपकार्यतावच्छेदकं द्रव्यप्रत्यक्षत्वमेव न त्वात्मेतरत्वमपि तत्र निविशत इत्यपि लाघवमित्याहुः । तदसत्, देहादीनां ज्ञानाद्युपादानत्वे प्रत्यभिज्ञानं न स्यादित्युक्तत्वात्, आश्रयचाक्षुषे जातेश्चाक्षुषत्वनियमेनात्मत्वस्य चक्षुषा ग्रहणप्रसङ्गाच्च । किञ्चैवमहं शरीरवानितिवदहमात्मवानिति प्रतीतिः स्यात् न स्याद्वा अहमात्मवानितिवदहं शरीरवानित्यपि। न च संयोगस्य पृथक्प्रत्यासत्तित्वाकल्पनलाघवमपि न्याय्यम्, परमाणौ पृथिवीत्वादिग्रहणवारणाय महत्त्वोद्भूतरूपयोः प्रत्यासत्तिमध्येऽवश्यं निवेश्यत्वेन त्रुटिग्रहार्थं तत्स्वीकारादुद्भूतरूपजन्यतावच्छेदकमपि मूर्त्तप्रत्यक्षत्वमेवेति न किञ्चिदनुपपन्नम् । यत्पुनरुक्तम् अनुमानान्मनोऽभ्युपगमेऽपि तदनतिरेकान्नापसिद्धान्त इति, तन्न, वह्निव्याप्यधूमवान् पर्वत एतादृशनिश्चयस्यैतदुत्तरदहनानुमितित्वस्य जन्यतावच्छेदकत्वेन धर्मविशेषसिद्धौ धर्मिविशेषसिद्धेः प्रमाभेदेन प्रमाकरणभेदात् । न चैतदुत्तरज्ञानत्वमेव तज्जन्यतावच्छेदकम्, अप्रामाण्यज्ञानशून्यानाहार्यतादृशनिश्चयं विनापि तदवच्छिन्नस्मृतिसन्देहादिसम्भवेन व्यभिचारात् । न च गृहीताप्रामाण्यकाहार्याविनश्यदवस्थधूमपरामर्शविशिष्टायामविनश्यदवस्थालोकादिपरामर्शजन्यानुमितौ व्यभिचारवारणायाप्रामाण्यग्रहाभावाहार्यभेदयोर्जन्यतावच्छेदके निवेशान्नोक्तदोष इति वाच्यम्, अनुगतरूपेण तदनिवेशात् तत्तदप्रामाण्यग्रहाभावतत्तदाहार्यभेदादीनां जन्यतावच्छेदके निवेशे गौरवादनुमितित्वस्यैव तत्र निवेशयितुं युक्तत्वात् । न चाप्रामाण्यप्रकारतानिरूपितोभयावृत्तिधर्मावच्छिन्नविशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकस्याप्रामाण्यग्रहाभावस्यानुगतस्यैव निवेशान्नोक्तगौरवमिति वाच्यम्, तथापि प्रकृते स्वोत्तरत्वस्य स्वध्वंसाधारकालध्वंसानाधारस्वध्वंसाधारक्षणवृत्तित्वरूपस्य निवेशनीयतया प्रागुत्पन्नसंस्कारवारणायानुमितित्वनिवेशावश्यकत्वात् । न चापेक्षाबुद्ध्यात्मकपरामर्शद्वितीयक्षणोत्पन्नतदनात्मकानुमितिसङ्ग्रहायाव्यवहितोत्तरोत्पत्तिकत्वमेव संस्कारव्यावृत्तं वैशिष्ट्यं देयमिति वाच्यम्, स्वध्वंसाधारपदस्यापेक्षाबुद्धिरूपपरामर्शानाधारस्वध्वंसानाधारार्थकत्वे उक्तानुमितिसङ्ग्रहात्, ज्ञानत्वनिवेशे प्रत्यक्षादिष्वनपेक्षितपरामर्शजन्यत्वकल्पनापत्तेरनुमितित्वनिवेशौचित्याच्च । यच्चाप्रामाण्यज्ञानाभावस्य पृथक्कारणत्वान्नायं दोष इति, तन्न, तत्तद्व्यक्तित्वेनाप्रामाण्यग्रहाभावानां तत्तदप्रामाण्यग्रहाभावविशिष्टधूमादिलिङ्गकानुमितिं प्रति हेतुत्वकल्पनापेक्षया सामानाधिकरण्यविशिष्टविशेष्यतासम्बन्धावच्छिन्नप्रति-

योग्यताकाङ्क्षाप्रामाण्यग्रहाभावानामवच्छेदकत्वकल्पनौचित्यात् । यत्तु वह्निमनुमिनोमीत्यनुव्यवसायेनानुमितित्वसिद्धिरिति, तन्न, तत्र विधेयताविशेषस्यैव विषयत्वात् अन्यथा पर्वतमनुमिनोमीत्यपि स्यात् । परामर्शजन्यतायामपि स एव प्रवेश्यतामिति चेत्, न, तदीयसम्बन्धापेक्षयानुमितित्वीयसम्बन्धस्य समवायरूपस्य कार्यतावच्छेदकतावच्छेदकत्वे लाघवात् । ननु तथाप्यनुमितित्वस्य मानसत्वव्याप्यत्वमेवेति प्रागुक्तं तथा च नानुमानस्य प्रमाणान्तरत्वम् । न चानुमितेः साक्षात्कारत्वे कथं न वह्निं साक्षात्करोमीति प्रतीतिरिति वाच्यम्, तत्र लौकिकविषयतया साक्षात्काराभावादेव युक्तत्वादाविव तदुपपत्तेः । अत एव पीतं शङ्खं साक्षात्करोमीत्यादिप्रतीतिबलादारोपविशेषजन्यतयापि लौकिकविषयतां कल्पयन्ति प्रान्तिकाः । युक्तं चैतत्, चाक्षुषादिसामग्रीसत्त्वे मानसत्वरूपव्यापकधर्मावच्छिन्नसामग्र्यभावादेवानुमित्यनुदयोपपत्तौ अनुमितित्वादेस्तत्प्रतिबध्यतावच्छेदकत्वाकल्पनेन लाघवात् । अथानुमित्साप्रयोजकभेदेन विभिन्नरूपेण प्रतिबध्यप्रतिबन्धकभाव आवश्यक इति चेत्, न, तत्तदिच्छानन्तरोपजायमानभिन्नमानसे जातिविशेषं स्वीकृत्य तदवच्छिन्नं प्रति मानसान्यज्ञानसामग्र्याः प्रतिबन्धकत्वकल्पनादनुमितित्वादेर्मानसवृत्तित्वकल्पनौचित्यात् । अथ तत्तदिच्छाविरहकाले तत्तदिच्छानन्तरोपजायमानमानसापत्तिरिति चेत्, न, तादृशमानसं प्रति तत्तदिच्छानां हेतुत्वात्, न चैवं गौरवं, फलमुखत्वात्, वस्तुत आपादकाभावादेव न तदा तदापत्तिः । अथ सुस्मूर्षानन्तरोपजायमानभिन्नज्ञाने जातिविशेषं स्वीकृत्य तदवच्छेदेन चाक्षुषादिसामग्र्याः प्रतिबन्धकत्वेऽनुमितित्वादेः परोक्षवृत्तित्वमस्त्विति चेत्, न, तदवच्छेदेन स्मृत्यन्यज्ञानसामग्र्या एव प्रतिबन्धकत्वात् तज्जातिविशेषस्य स्मृतित्वव्याप्यस्यैव युक्तत्वात्, तज्जातिमदन्यज्ञानसामग्रीत्वादिना प्रतिबन्धकत्वेऽपि विशेषणतावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकतया सिद्धस्य प्रत्यक्षत्वस्यैवानुमितौ युक्तत्वादिति चेत्, अत्र वदन्ति न्यायनिष्णाताः—तदानीं वह्निमानसस्वीकारे लिङ्गादीनामपि मानसापत्तिः । न चाचार्यमत इव तत्र तज्ज्ञानमात्रे इष्टापत्तिः, एवमप्युच्छृङ्खलोपस्थितानां घटादीनां तत्र मानापत्तेः । न च तद्धर्मिकतत्संसर्गकतद्धर्मावच्छिन्नव्याप्यवत्ताज्ञानात्मकपरामर्शादिरूपविशेषसामग्रीविरहात् न तदापत्तिरिति वाच्यम्, सामान्यसामग्रीवशात्तदापत्तेः । न च घटमानसत्वस्य परामर्शादिप्रतिबध्यतावच्छेदकतया न तदापत्तिः, घटमानसत्वादेरप्युच्छृङ्खलोपस्थितघटादिमानवारणाय तत्प्रतिबध्यतावच्छेदकत्वेऽनन्तप्रतिबध्यप्रतिबन्धकभावकल्पनापत्तेः । अथ भोगपरामर्शजन्यभिन्नज्ञाने जातिविशेषं स्वीकृत्य तदवच्छिन्नमानसं प्रति तज्जातीयान्यज्ञानसामग्र्याः प्रतिबन्धकत्वात् न तदानीं वह्नीतरज्ञानापत्तिरिति चेत्, न, मानसत्वस्यैव

तत्प्रतिबध्यतावच्छेदकत्वौचित्यात् । न चैवमनुमितिसामग्र्यां सत्यां भोगोऽपि कथं भवेदिति वाच्यम्, भोगान्यज्ञानप्रतिबन्धकतावच्छेदकतया समानीतजातिविशेषवतां सुखदुःखानामुत्तेजकत्वात् । न च तादृशसुखदुःखकालेऽप्यनुमितिसामग्रीभूतपरामर्शादौ समवायेन तदभावादनुमित्यापत्तिः, सामानाधिकरण्यकालिकोभयसम्बन्धावच्छिन्नतदभावस्य निवेशादित्यधिकं मत्कृतस्याद्वादरहस्ये । तस्मादात्मनः प्रमाणसिद्धत्वात् न तस्य मोक्षाद्यसम्भव इति ॥ ननु युक्तमुक्तमात्मा प्रमाणसिद्ध इति, यत्तु स्वसंवेदनप्रत्यक्षमप्यत्र प्रमाणमित्युक्तं तत्कथं सङ्गच्छते ज्ञानस्य स्वसंविदितत्वासिद्धेः । न च सर्वज्ञानानां घटमहं जानामीत्याद्याकारत्वात् प्रत्यक्षेणैव स्वविषयत्वसिद्धिः, तत्र ज्ञाने घटविषयत्वग्रहेऽपि स्वस्य ज्ञानविषयत्वाग्रहात् स्वस्य स्वाविषयत्वेन स्वविषयत्वाविषयत्वात्, अन्यथा घटज्ञानज्ञानवानित्याकारप्रसङ्गात् । किञ्च घटमहं जानामीति ज्ञाने क्रियायाः कृतेर्वा समवायित्वलक्षणमात्मनः कर्तृत्वं परसमवेतक्रियाफलशालित्वं करणव्यापारविषयत्वं वा विषयस्य कर्मत्वं धात्वर्थत्वं कृतिजन्यत्वं वा ज्ञानस्य क्रियात्वमयोग्यत्वात् न भासत इति न तादृशत्रिपुटीप्रत्यक्षात् स्वसंविदितत्वसिद्धिः । किं चार्थविषयत्वेनैव ज्ञानस्य प्रवर्त्तकत्वं न तु स्वविषयत्वेनापि गौरवात्, तथा चार्थमात्रविषयो व्यवसाय इति । अपि चाहमिदं जानामीत्यत्रेदंत्वविशिष्टज्ञानवैशिष्ट्यमात्मनि भासते, न च स्वप्रकाशे तदुपपत्तिः, ज्ञानस्य पूर्वमज्ञातत्वेन प्रकारत्वानुपपत्तेः । न चाभावत्वाभानेऽप्यभावत्वविशिष्टबोधात् तत्र व्यभिचारवारणाय समानवित्तिवेद्यभिन्नविशेषणज्ञानत्वेन विशिष्टबुद्धौ हेतुत्वात् न दोष इति वाच्यम्, यद्धि येन विना न भासते तत्तत्समानवित्तिवेद्यं तद्ग्रहसामग्रीनियतग्रहसामग्रीकमित्यर्थः । न च ज्ञानाभाने आत्माभानमित्यास्ति, तद्भानेऽप्यहं सुखीति भानस्य सर्वसिद्धत्वात् । अपि च प्रत्यक्षविषयतायामिन्द्रियसन्निकर्षस्य नियामकत्वात् कथं तदनाश्रयस्य स्वस्य प्रत्यक्षत्वं, कथं वा प्रत्यक्षाजनकस्य प्रत्यक्षविषयत्वं, प्रत्यक्षविषयतायास्तज्जनकत्वव्याप्तत्वात् । न च संस्कारस्मृत्याद्युपनीततत्तादौ व्यभिचारः, अतीतानागतगोचरसाक्षात्कारजनकप्रत्यासत्त्यजन्यप्रत्यक्षविषयतायास्तथात्वात् । वस्तुतो लौकिकप्रत्यक्षविषयतायाः प्रत्यक्षजनकत्वव्याप्तत्वात् तदजनके स्वस्मिन् लौकिकसाक्षात्कारविषयता न स्यादिति द्रष्टव्यम् । तेनानुपदोक्तनियमे विद्यमानत्वसामान्यजन्यप्रत्यक्षविषये व्यभिचारवारणायाऽजनकविषयसाक्षात्कारेत्यादिना विशेषणेऽनतिप्रयोजनत्वात् प्रत्यासत्तिभागमपहायाजनकविषयसाक्षात्कारान्यप्रत्यक्षविषयताया एव जनकत्वनियमकल्पने स्वस्याजनकत्वेन स्वविषयतायां जनकत्वस्यानियामकत्वेन स्वविषयता न बाधितेति पक्षधरमिश्रोक्तावपि न क्षतिः । वस्तुतोऽत्र यथाश्रुतेऽप्रसिद्धिः, परमते ज्ञानमात्रस्यैवाजनकविषयत्वादिति अजनकवृत्ति-



न्याया
लोकः
॥ ९ ॥

वि,ष्यतान्यसाक्षात्कारविषयतायास्तयात्मोक्तौ साक्षात्करोमीत्यनुभवसिद्धविषयताया एव तथात्वौचित्यात् । किञ्च लौकिकप्रत्यक्षविषयत्वेन लाघवादिन्द्रिययोग्यता नेष्ट्या,तत्स्वरूपत्वादिना, लौकिकप्रत्यक्षविषयत्वं चोपलक्षणं न तु विशेषणं तेन प्रत्यक्षपूर्वं प्रत्यक्षाविषयत्वेऽपि न क्षतिरिति ज्ञानस्य परिशेषान्मनोग्राह्यत्वसिद्धौ न स्वप्रकाशत्वम् । एतेन क्षणिकात्मविशेषगुणत्वेन न योग्यता, निर्विकल्पकजीवनयोनियत्नसाधारण्यात्, नापि तदितरत्वनिवेशे दोषाभावो निर्विकल्पकान्यत्वजीवनयोनियत्नान्यत्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहात्, क्षणिकत्वस्य चतुर्थक्षणवृत्तिध्वंसप्रतियोगित्वरूपत्वात् क्षणस्य स्वस्वघटितत्वेनाननुगमाच्च । नापि ज्ञानेच्छादिवृत्तिजातिविशेष एव मनोयोग्यतावच्छेदकः, ज्ञानत्वादिना साङ्कर्येण तादृशजात्यसिद्धेः । न च तादृशजातेर्निर्विकल्पकवृत्तित्वेऽपि सम्बन्धिप्रकारार्थनिरूपणस्य सम्बन्धितावच्छेदकप्रकारकज्ञानाधीनत्वेन तद्विरहादेव तस्य तद्विषयत्वेनाज्ञानं, न च विषयानुपरक्तज्ञानापत्तिर्ज्ञानमानसामग्र्या विषयभानसामग्रीनियतत्वादिति मिश्रमतं युक्तम्, निर्विकल्पानन्तरव्यवसायस्य सम्बन्धितावच्छेदकघटत्वादिप्रकारकस्य सत्त्वान्निर्विकल्पकाध्यक्षापत्तेः । न च प्रत्यक्षे स्वसमयवृत्तित्वेन विषयस्य हेतुत्वात् नोक्तदोष इति वाच्यम्, गौरवेण स्वसमयवृत्तित्वेनाहेतुत्वात् । न चानुव्यवसायस्य प्रकारत्वांशे प्रमात्वनियमात्तद्वत्त्वप्रकारकस्वप्रकारकानुव्यवसायस्य निर्विकल्पकविषयत्वे भ्रमत्वापाताच्चाव्यवसायसामग्रीभूतगुणस्य निर्विकल्पकविषयकत्वे विरोधित्वादेव न तत्प्रत्यक्षमिति वाच्यम्, तादृशगुणस्यात्ममनोयोगविशेषस्य वा तद्विरोधित्वमिति विनिगमनाविरहात्, तादृशमतिविरुद्धप्रतिबन्धकभावकल्पनापेक्षया तद्योग्यत्वकल्पनाया एवौचित्याच्च । नापि भेदविशेषस्तथा, प्रतियोग्यननुगमेन तदननुगमात्तत्तद्भेदस्य चासिद्धेरिति नानुगतरूपेण योग्यतास्तीति परास्तम् । परप्रकाशेऽनवस्थानात् स्वप्रकाशसिद्धिरिति न युक्तम्, स्वप्रकाशत्वस्यापि परिशेषानुमेयतया तदनुमितिस्वप्रकाशताया अप्यनुमानान्तरलभ्यतयाऽनवस्थासाम्यात्, विषयान्तरसञ्चारादिना प्रतिबन्धेन तत्प्रसक्त्याप्युभयत्र साम्यात् । किञ्चानुमित्यादौ साङ्कर्यापत्तिः प्रत्यक्षत्वं, न च स्वविषयत्वे ज्ञानानपेक्षत्वं तत्त्वं न तु जातिरिति वाच्यम्, एकत्र ज्ञानापेक्षानपेक्षयोर्विरोधात् । न च भ्रमस्य यथा धर्मिविषयकत्वावच्छेदेन दोषापेक्षा धर्मिविषयकत्वावच्छेदेन च तदनपेक्षा तथानुमित्यादौ पक्षादिविषयतावच्छेदेन ज्ञानापेक्षा स्वविषयतावच्छेदेन च न सेति पक्षादिविषयतावच्छेदेन परोक्षत्वं स्वविषयतावच्छेदेन च प्रत्यक्षत्वमिति वाच्यम्, दोषापेक्षे भ्रमे तदनपेक्षानभ्युपगमाद्धर्म्यंशे स्वभावदेवाभ्रमत्वात् । किञ्च ज्ञानजन्यतानवच्छेदकं यत्किञ्चिज्जन्यतावच्छेदकं यद्विषयत्वं तदवच्छेदेन तस्य प्रत्यक्षत्वमिति स्वविषयकत्वेन न प्रत्यक्षत्वं, ज्ञानसामान्यसामग्र्या ज्ञानत्वस्यैव जन्य-

तावच्छेदकत्वात् विशेषसामग्र्यां च तस्यातिप्रसक्ततयैवानवच्छेदकत्वादित्याहुः।अथ वित्तेरवश्यवेद्यत्वात् स्वप्रकाशत्वं नो चेद् या वित्तिर्न वेद्यते तदधीनसत्त्वस्य विषयपर्यन्तस्यासत्त्वं स्यादिति चेत्, न, सर्वासां वित्तीनां ज्ञानज्ञानत्वेनावश्यवेद्यत्वादिति चेत्। अत्रोच्यते—जानामीति सार्वलौकिकं ज्ञानं पूर्वापरज्ञानकल्पनागौरवसहकृतं कर्तृकर्मक्रियावगाहि सत् स्वविषयत्वे प्रमाणं, तदिदमुक्तं सम्मतिटीकाकृता—एकस्मादेव विषयावभाससिद्धेः किं द्वयकल्पनयेति। न च जानामीत्यत्र ज्ञानावभासेऽपि तद्विषयत्वानवभास इति वाच्यम्, ज्ञानस्वरूपाया विषयतायास्तज्ज्ञानेऽवश्यम्भानात्, ज्ञानस्येदं जानामीदं ज्ञानं जानामीत्युभयाकारत्वात्, आंशिकतद्भेदाच्चाभिलापभेदस्तस्य विवक्षाधीनत्वात्, एतेन स्वविषयत्वे सिद्धे गौरवसहकृतं ज्ञानगोचरतायां ग्राहकं प्रत्यक्षं स्वप्रकाशतायां प्रमाणं तेन च मानेन तस्य स्वविषयतासिद्धिरित्यन्योन्याश्रय इति परास्तम्, ज्ञानविषयत्वेनानुभूयमानस्यानुव्यवसायस्य लाघवेन व्यवसायात्मकत्वकल्पने तत्स्वप्रकाशतासिद्धेः। नन्वेवमेकत्र व्यवसाये ज्ञानज्ञानाद्यनन्ताकारभारमन्थरत्वं स्यात् तथा च तावत्प्रतिसन्धानं दुश्शकमिति चेत्, न, घटज्ञानज्ञानत्वस्य घटज्ञानत्वादभिन्नतया घटज्ञानत्वेन सर्वज्ञानज्ञानात्। परप्रकाशे च ज्ञानस्य प्रत्यक्षानुपपत्तिः। न च ज्ञानत्वनिर्विकल्पकजन्यज्ञानक्षणे व्यवसायस्याभावेऽपि पूर्वं तत्सत्त्वात् तदा तत्प्रत्यक्षं ततो विशेषणज्ञानादात्मनि ज्ञानविशिष्टधीः विशेषणं च न विशिष्टप्रत्ययहेतुस्तत्तां विनापि तद्बुद्धेः प्रत्यभिज्ञादर्शनादिति वाच्यम्, प्रत्यक्षे विषयस्य स्वसमयवृत्तित्वेनैव हेतुत्वात् अन्यथा विनश्यदवस्थघटचक्षुःसन्निकर्षात् घटनाशक्षणे घटप्रत्यक्षप्रसङ्गात्, ज्ञानस्यातीतत्वेन जानामीति वर्त्तमानत्वज्ञानानुपपत्तेश्च, न च वर्त्तमानत्वेन स्थूल उपाधिर्भासते न तु क्षणस्तस्यातीन्द्रियत्वादिति वाच्यम्, स्थूलोपाधेरपि नियमतोऽभानात्, संसर्गशब्दादिना तु क्षणस्यापि सुज्ञानत्वादन्यथा घटपूर्वसमये इदानीं घटो भवतीति व्यवहारप्रामाण्यप्रसङ्गात्। किञ्चाहं घटज्ञानवानितिवन्मयि घटज्ञानमित्यप्यनुभवो नेच्छामात्रेणापह्नोतुं शक्यते तत्र च व्यवसायस्य विशेष्यत्वात् तस्य च पूर्वक्षणेप्यसत्त्वात् कथं तत्प्रत्यक्षम्। तदिदमुक्तं स्याद्वादरत्नाकरे—किञ्चेन्द्रियजं प्रत्यक्षं सन्निकृष्टे विषये प्रवर्त्ततेऽतीतक्षणवर्त्तिनश्च ज्ञानस्य मनोलक्षणेन्द्रियसन्निकर्षो न युज्यते ततः कथं प्राचीनज्ञाने मानसप्रत्यक्षवार्त्तापीति। व्यवसायनाशक्षणोत्पन्नव्यवसायान्तरे ज्ञानत्वविशिष्टबुद्धिरित्यपि न रमणीयम्, तद्धेतोश्चक्षुःसन्निकर्षादेस्तदानीं नियतसन्निधिकत्वाभावादनुमितिपाश्चात्यव्यवसायेऽनुमितित्वाभावात्, पूर्वव्यवसायविशेष्यकज्ञानस्य कथमप्यनुपपत्तेश्च। एतेन ज्ञानं ज्ञानत्वं च निर्विकल्पके भासते ततो ज्ञानत्ववैशिष्ट्यं ज्ञाने ज्ञानवैशिष्ट्यं चात्मनि भासत इति विशेष्ये विशेषणं तत्र च विशेषणमिति रीत्या ज्ञानप्रत्यक्षमिति

निरस्तम् , ज्ञाने घटीयं न वेति सन्देहेऽपि तद्बुद्धिमसङ्गाच्च । यत्तु ज्ञानमभाव इव विशिष्टज्ञानविषय, एवानुव्यवसायस्य विषयरूपविशेषणविषयकव्यवसायसाध्यत्वेन विशिष्टज्ञानसामग्रीसत्त्वात् ज्ञानत्वमपि तत्र भासते सामग्रीसत्त्वाद्वेऽपि सत्सप्रकारकं निष्प्रकारकं चेति नरसिंहाकारं तमेव विशिष्टं ज्ञानत्ववैशिष्ट्यं च भासते अनुमित्यादौ च न तथा अनुव्यवसायेऽनुमितित्वाभावादिति वस्तुतस्त्विति कृत्वा चिन्तामणिकृदोक्त, तदसत् , सार्वत्रिकप्रकारं विना काचित्कप्रकाराभिधानस्य प्रयासमात्रत्वात् , अभावप्रत्यक्षस्य घटत्वाद्यन्यतमविशिष्टविषयकत्वानियमवत् ज्ञानप्रत्यक्षे तन्नियमाभावादहं सुखीतिवदहं ज्ञानवानिति विषयविनिर्मुक्तप्रतीतेः सार्वजनीनत्वात् , सन्निकर्षकार्यतायां विषयान्तर्भावे गौरवाच्च । ज्ञाने नृसिंहाकारतोपगमे विषयेऽपि तदावश्यकत्वेन स्याद्वादापाताच्च । यत्तु नरसिंहाकारज्ञाने ज्ञानत्वघटत्वप्रकारत्वोभयाभयज्ञानवैशिष्ट्याधीनं स्यादिति, तत्तु विषयानिरूप्यं हि ज्ञानं न तु विषयपरम्परानिरूप्यमित्यादिना मिश्रेणैव समाहितम् । यत्तु स्वसंवेदने कृतिसमवायित्वादिरूपकर्तृत्वाद्यनवभास इत्युक्तं, तदभिप्रायापरिज्ञानात् , आश्रयत्वरूपकर्तृत्वस्य विषयत्वरूपकर्मत्वस्य विशेषणत्वरूपक्रियात्वस्य च दोषाकलङ्कितत्वात् । अधिकविषयकत्वेऽपि च व्यवसायस्यार्थविषयत्वेन प्रवर्तकत्वमविरुद्धम् , इष्टतावच्छेदकप्रवृत्तिविषयवैशिष्ट्यावगाहिज्ञानत्वेन प्रवर्तकत्वात् । न चात्र प्रमेयमिति ज्ञानात्प्रवृत्त्यापत्तिः , इष्टतावच्छेदके तद्भिन्ननिष्ठधर्माप्रकारकत्वविशेषणात् , । न चेष्टतावच्छेदकप्रकारकज्ञानस्य मुख्यविशेष्यतया प्रवृत्तिहेतुत्वं, रजतमिदं द्रव्यमिति ज्ञानात्प्रवृत्तिवारणाय प्रवृत्तिविषयविशेष्यकत्वावच्छेदेनेष्टतावच्छेदकप्रकारकत्वस्य वाच्यत्व इष्टतावच्छेदकविशेष्यकत्वावच्छेदेन प्रवृत्तिविषयप्रकारकत्वेनापि हेतुतायां विनिगमनाविरहादुभयमुद्द्योक्तेनैकरूपेण हेतुत्वौचित्यात् । यत्तु वह्निव्याप्यधूमवत्पर्वतवान् देश इति परामर्शात् पर्वतो वह्निमानित्यनुमितेरनुदयात् वह्निव्याप्यधूमत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नमुख्यविशेष्यताकपरामर्शत्वेन हेतुता, मुख्यविशेष्यतात्वञ्च प्रकारतानात्मकविशेष्यतात्वं, स्वप्रकाशनये च पर्वतविशेष्यताया ज्ञानविशेष्यतानिरूपितप्रकारतात्मकत्वात् तदतिरिक्तविशेष्यत्वानिरूपितेत्याद्युक्तौ गौरवमिति, तन्न, स्वप्रकाशस्य व्यवसायानुव्यवसायोभयाकारत्वेऽप्यविरोधात् , तत्र ज्ञानमानसादौ पक्षत्वनुमितिसामग्र्यादिप्रतिबन्धकत्वकल्पने महागौरवाच्च । नन्वेवमर्थविषयत्वेन प्रवर्तकत्वे रजतज्ञानस्य शुक्तिविषयत्वे अन्यथाख्यात्यापत्तिरिति चेत् , सोऽयं तदनभ्युपगन्तुः प्राभाकरस्य शिरसि प्रहारो न त्वस्माकम् । यत्तु ज्ञानस्य पूर्वमनुपस्थितत्वाज्ज्ञानामीत्यत्रापि विशेषणतया भानानुपपत्तिरिति, तन्न, तस्यात्मवित्तिवेद्यत्वादहं सुखीत्यस्यापि सुखं साक्षात्करोमीत्याकारत्वात्,

न्याय लोक

अनभ्यासादिदोषेण तदनभिलापात् । यत्तु प्रत्यक्षविषयतायामिन्द्रियसन्निकर्ष एव नियामक इति, तन्न, अलौकिकप्रत्यक्षविषयतायां व्यभिचारात् । लौकिकत्वस्य प्रत्यक्षविशेषणत्वे च तस्येन्द्रियसन्निकर्षजन्यत्वरूपतयेन्द्रियसन्निकर्षजप्रत्यक्षविषयतायामिन्द्रियसन्निकर्षनियामकत्वस्य प्रकृताप्रतिपन्थित्वात् । अथ लौकिकत्वं विषयताविशेषणं तादृशी च विषयता साक्षात्करोमीत्यनुभवसाक्षिकेति चेत्, न, ईश्वरप्रत्यक्षविषयतायां व्यभिचारात्, जन्यत्वस्य प्रत्यक्षविशेषणत्वेऽपि शङ्खादाविदं पीतरूपमिति दोषप्रभवप्रत्यक्षविषयतायां व्यभिचारात् । तस्मात् सम्बन्धविशेषेण विषयनिष्ठस्य प्रत्यक्षप्रतिबन्धकज्ञानावरणापगमस्य शक्तिविशेषस्य वा प्रत्यक्षविषयतानियामकत्वमिति युक्तमुत्पश्यामः । एतेन क्वचिदिन्द्रियसन्निकर्षः क्वचिद्दोषविशेषश्च तन्नियामकोऽन्ततस्तदन्यान्यत्वेन वा तन्नियामकत्वं तत्र ज्ञानाभेदनिवेशे च गौरवमिति निरस्तम् । वस्तुतश्चक्षुर्मनसोरप्राप्यकारित्वात् दोषाजन्यलौकिकप्रत्यक्षविषयतायामपि नेन्द्रियसन्निकर्षनियामकत्वमिति स्मर्त्तव्यम् । अप्रयोजकत्वेनैतादृशनियमासिद्धेश्च । अभेदे कथं विषयत्वमिति चेत्, यथा घटाभावे घटाभावविशेषणत्वं, किं तदिति चेत्, स्वभावविशेष एव, अनिर्वचनात् तदसिद्धिरिति चेत्, न, माधुर्यादिवत्तस्याख्यातुमशक्यत्वेऽपि प्रत्याख्यातुमशक्यत्वात् । यत्तु स्वव्यवहारशक्तत्वमेव स्वविषयत्वमिति, तन्न, आत्मन्यतिप्रसङ्गात्, ज्ञानपददाने चेच्छाद्यनुपसङ्ग्रहादिच्छादौ परम्परया तत्सत्त्वस्य च ज्ञानादावपि सुवचत्वात्, शक्तेः पदार्थान्तरत्वेनात्माश्रयोद्धारेऽपि तस्या अनन्यथासिद्धनियतपूर्ववृत्तित्वज्ञानव्यङ्ग्यत्वेनान्योऽन्याश्रयानुद्धाराच्चेति विभावनीयम् । यदपि प्रत्यक्षाजनकस्य प्रत्यक्षाविषयत्वं स्यादित्युक्तं, तदपि प्रागुक्तयुक्त्यैव प्रत्युक्तम्, ईश्वरसाक्षात्कारविषये दोषविशेषप्रभवसाक्षात्कारविषये च व्यभिचारात् । अत एव च लौकिकप्रत्यक्षविषयत्वेन लाघवादिन्द्रिययोग्यत्वात् ज्ञानविषयं मानसं ज्ञानमावश्यकमिति निरस्तम्, शक्तिविशेषेणैव तद्योग्यतावच्छेदाच्च, एतेन च ज्ञानस्य मानससाक्षात्कारानभ्युपगमे धर्माधर्मादीनामिव मानससाक्षात्कारप्रतिबन्धकत्वकल्पने गौरवमिति सार्वभौममतं निरस्तम्, अयोग्यत्वस्य प्रतिबन्धकत्वेऽविश्रामात् स्वरूपायोग्यतयैव तत्त्वादिति यौक्तिकाः । यत्तु ज्ञानस्य स्वप्रकाशत्वानुमितौ तत्स्वप्रकाशतायामप्यनुमित्यन्तरापेक्षायामनवस्थेति, तन्न, ज्ञानत्वावच्छेदेन स्वप्रकाशतानुमितौ तद्विशेषे तत्संशयायोगाद्विशेषे तदनुमित्सया च तादृशानुमितेर्यावत्सिसाधयिषमनुसरणेनानवस्थापरिहारात् । न चानुव्यवसायेऽप्येवं न्यायः, प्रत्यक्षस्येच्छानधीनत्वात् घटदिदृक्षयोन्मीलितनयनस्य पुंसः सन्निकृष्टस्य पटस्यैव दर्शनात् । ज्ञानज्ञानादेर्विषयान्तरसञ्चारादिप्रतिबद्धत्वकल्पनापेक्षया च तदयोग्यत्वकल्पनाया


॥११

एव न्याय्यत्वात् । न चैवमाद्यशुद्धज्ञानमानसानुपपत्तिरिति वाच्यम्, ज्ञानमानसे तद्रूप्येण ज्ञानस्याहेतुत्वेऽपि ज्ञानसामान्यसामग्र्यैव तदुपपत्तेर्विशेषसामग्री-
सहिताया एव सामान्यसामग्र्याः कार्यजनकत्वमिति प्रवादस्य निर्युक्तिकत्वेनाश्रद्धेयत्वात् । ज्ञानानपेक्षेऽनुमित्यादिज्ञाने स्वविषयत्वेऽपि प्रत्यक्षत्वं न स्यादित्यपि
वचनं न रमणीयं, यद्विषयत्वं ज्ञानजन्यतानवच्छेदकं तद्विषयतावच्छेदेन प्रत्यक्षत्वमित्युपगमात्, यद्विषयत्वे किञ्चिज्जन्यतावच्छेदकत्वविशेषणदानस्य च
निष्प्रयोजनत्वात् । न चाहमेवत् सगन्धविज्ञानवान् तत्सामग्रीत इत्यनुमितौ अहंविषयकत्वेनापि व्याप्तिज्ञानजन्यतानवच्छेदादहंविषयकत्वावच्छेदेनापि प्रत्य-
क्षत्वानुपपत्तिरिति वाच्यम्, उद्देश्यताविधेयतातिरिक्तयद्विषयत्वमित्याद्युक्तौ दोषाभावात् । यत्तु व्याप्तिज्ञानादेरपि तत्तदुपरानुमितित्वमेव जन्यतावच्छेदकमित्य-
तिप्रसङ्ग इति, तन्न, पर्वतभूतस्योर्वह्निपटव्याप्यप्रकाशसमूहालम्बनपरामर्शादनुमितौ पक्षसाध्यविपर्ययप्रसङ्गवारणाय जन्यतावच्छेदके तत्पक्षकतत्साध्यकत्वनिवेश-
स्यावश्यकत्वात् । स्वपरप्रकाशमननशक्ती एव प्रत्यक्षत्वपरोक्षत्वे इति प्राञ्चः । वस्तुतः स्पष्टताख्यविषयतैव प्रत्यक्षत्वमस्पष्टताख्यविषयता च परोक्षत्वम् ।
अत एव पर्वतो वह्निमानित्यत्र पर्वतांशे स्पष्टतया प्रत्यक्षत्वमिति यद्वि न साक्षात्करोमीतिवत् पर्वतं न साक्षात्करोमीति न धीः । अस्पष्टताख्यविषयतायां
च संशयस्येव सिसाधयिषाया अपि नियामकत्वात् प्रत्यक्षपरिकलितसाध्यकानुमितौ साध्यांशेऽपि न प्रत्यक्षत्वमिति युक्तमाभाति ॥

॥ इति न्यायविशारदविरचिते न्यायालोके प्रथमः प्रकाशः ॥

॥ अर्हम् ॥ ननु युक्तमुक्तं ज्ञानं स्वसंवेदनमिति, यत्पुनरस्य अंशतया बाह्यार्थाभावादित्यभ्युपगम्यते तद्वयं न सहामहे—बाह्यार्थस्यै-
वासिद्धेः, जडस्य स्वप्रकाशायोगात्, परप्रकाशादपि न तत्सिद्धिर्नीलसुखादिव्यतिरिक्तविज्ञानासंवेदनात् । न च नीलस्य प्रकाश इत्यभिलापा-
देतयोर्भेदः, अभ्यस्तो विवेकेनाप्रतीयमानयोः स्वरूपवदभेदात्, काल्पनिकभेदस्य चाभेदाप्रतिपन्थित्वात् । ननु नीलादेर्ज्ञानाभेदे सर्वत्र सर्वदा सर्वाकारज्ञानं
स्यादिति चेत्, न, स्वप्नावस्थायामिव जाग्रदवस्थायामपि वासनयैव तत्तदाकारप्रतिनियमात् । अथ नीलादेर्ज्ञानात् पूर्वं सत्त्वाद्भेद इति चेत्,
न, अनुपलब्ध्या प्राक् तदसत्त्वस्यैव सिद्धेः । स्वदर्शनात् प्रागपि परस्योपलम्भोऽस्त्येवेति चेत्, न, स्वपरदृष्टनीलादेः सादृश्येऽप्येकत्वासिद्धेः,
एकाकारप्रतीतेरेकगोचरत्वे च स्वपरदृष्टसुखादेरप्येकत्वप्रसङ्गः । सन्तानभेदात् तद्भेद इति चेत्, तद्भेदो-
ऽर्थभ्राजत्वाद्वर्तमानत्वाभ्यां तद्भेदस्यावश्यकत्वात् ।

ऽप्यन्यभेदादित्यनवस्थानात्, स्वरूपत एव सुखादेर्भेदे च स्वरूपत एव नीलादेर्भेदात् । यत्तु ग्राह्यग्राहकभावेन ज्ञानार्थयोर्भेद इति, तन्न, परमार्थतो धियो ग्राह्यग्राहकभावराहित्यात् । तदुक्तम्—" अवेद्यवेदकाकारा यथा भ्रान्तैर्निरीक्ष्यते ॥ विभक्तलक्षणग्राह्यग्राहकाकारविप्लवा ॥ तथा कृतव्यवस्थेयं केशादिज्ञानभेदवत् ॥ यदा तदा न संनोद्यग्राह्यग्राहकलक्षणा " ॥ २ ॥ इति । वस्तुतो ज्ञानाविषयतायां ज्ञानाभेदस्यैव नियामकत्वं न तु सन्निकर्षादेरिति लाघवात् ज्ञानाद्वैतसिद्धिः । अथ नीलादिकं नीलादिजन्यं ज्ञानं तु चक्षुरादिजन्यमित्यनयोर्भेद इति चेत्, न, नीलादीनामपि चक्षुरादिजन्यत्वात् नीलप्रत्यक्षत्वापेक्षया लाघवेन नीलत्वस्यैव जन्यतावच्छेदकत्वादिति, अत्रोच्यते—यत्तावदुक्तं नीलसंविदोरभेदादर्थाभाव इति, तदसत्, अन्तर्बहिर्भासमानतया तद्भेदोपलम्भात् । न च सहोपलम्भात् तदभेदः, सहार्थस्यैवाभेदासहत्वात्, न चैकोपलम्भादिति तदर्थः, घटालोकयोरिव भेदेऽप्येकोपलम्भाविरोधात् । किञ्चार्थाभावे निर्विभागमेव ज्ञानं प्रसज्येत न तु घटोऽयमित्याकारकं, घटाद्याकारस्य ज्ञानस्वभावत्वे च ज्ञानं घट इत्यपि प्रमा स्यात् । यत्त्वनुपलब्ध्योपलम्भात् प्रागर्थस्याभावसिद्धिरिति, तन्न, उपलब्धिलक्षणप्राप्तस्यैवार्थस्यानुपलब्ध्या अभावग्रहणादुपलब्धिलक्षणप्राप्तिश्च प्रतियोगिप्रतियोगिव्याप्येतरयावत्प्रतियोग्युपलम्भकसमवधानं, तथा च हारिभद्रं वचः—उपलब्धिलक्षणप्राप्तिस्तद्धेत्वन्तरसंहतेरिति, न च तदानीमर्थोपलम्भकयावत्सत्त्वमस्तीति सतोऽप्यर्थस्याग्रहणमिति न किञ्चिदनुपपन्नम् । न चोपलम्भाभाव एवाभावग्रहे हेतुर्न तु योग्यत्वमपि तत्र निविशते गौरवादिति वाच्यम्, एवं सति भूतले घटाभाववत् पिशाचाभावस्यापि ग्रहणप्रसङ्गात् । न चेष्टापत्तिः, पिशाचाभावं पश्यामीत्यप्रतिसन्धानात् । किञ्चैकस्य चित्रज्ञानस्य कथमनेकाकारशबलत्वं विरोधात् । न च बाह्यस्यैव विरुद्धधर्माध्यासाद्भेदोऽन्यथाऽर्थक्रियासाङ्कर्यादिति वाच्यम्, विज्ञानस्यापि प्रतिभाससाङ्कर्यापत्त्या ततो भेदोपपत्तेः । एतेन नीलसंविदोरविवेचनादभेद इति निरस्तम्, आकारयोरसम्भेदेन वेदनस्यैव विवेचनत्वात् । यदि चार्थसंविदोरैक्यमेव, तदा नद्युदकार्थं प्रवर्त्तमानस्य तज्ज्ञानमात्रादेव फलसिद्धिः स्यात् । तद्रसज्ञानं तत्फलहेतुरिति चेत्, तर्हि यदसन्निधानात् तद्विलम्बः स एव बाह्योऽर्थः, । वासनापरिपाकेऽप्यस्यैवाश्रयणीयत्वात्, निर्हेतुकत्वे च तस्य नित्यं सत्त्वमसत्त्वं वा स्यात् । किञ्चार्थस्यासतो ज्ञानेन सता सहाभेदे साध्ये ज्ञानस्याप्यसत्त्वाच्छून्यताप्रसङ्गः । न च विषयत्वं ज्ञानत्वव्याप्यमित्येव साध्यम्, प्रत्यक्षेणैव घटादौ ज्ञानत्वाभावप्रतीतेः । न चेयं भ्रान्तिः, बाधकाभावात् । न च स्वभावादेव भ्रान्तत्वं, ज्ञानत्वाविशेषे सर्वत्र तथात्वप्रसङ्गात्, किञ्च

शक्तिभेदाभ्युपगमे मुक्तिसंसारयोरविशेषप्रसङ्गः क्लिष्टाक्लिष्टचित्तयोरुपाधिसन्निधानाधीनत्वात् । न च स्वभावादेवानयोर्विशेषः, ज्ञानस्वभावस्यैकरूपत्वात् । शक्तिभेदाद्विशेषाभ्युपगमे च चरमक्लिष्टचित्तेऽक्लिष्टचित्तजनकशक्तिमति मुक्तित्वप्रसङ्गात् । एतेन यदुक्तं बौद्धम्मन्येन—"चित्तमेव हि संसारो रागादिक्लेशवासितम् । तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते" । १ । इति, तन्निरस्तम् । अभेदे वास्यवासकभावायोगाच्चेति । यत्तु ज्ञानस्य ग्राह्यग्राहकभाववैधुर्यमुक्तम्, तदसत्, एवं सति परचित्तसन्तानाग्रहे बुद्धस्याप्यसर्वज्ञत्वप्रसङ्गात् । बाह्यार्थवादे उक्तगौरवं तु प्रामाणिकमिति दिग् ॥ नन्वर्थज्ञानयोः प्रकाशो यद्यभिन्नस्तदा तदविवेको यदि च भिन्नस्तदा स्वप्रकाशक्षतिरिति चेत्, न, भेदाभेदोपगमेऽविरोधात् । न च तदसिद्धिः, अंशांशिनां गुणगुण्यादीनां च सम्बन्धतयैव तत्सिद्धेः । न च समवाय एव तत्सम्बन्धः, तत्र प्रमाणाभावात् । न हि गुणक्रियाजातिविशिष्टबुद्धयो विशेषणसम्बन्धविषया विशिष्टबुद्धित्वात् दण्डीतिबुद्धिवदित्यनुमानात् तत्सिद्धिः, अभावज्ञानादिविशिष्टबुद्धिभिर्व्यभिचारात् । न च तासामपि स्वरूपसम्बन्धविषयत्वात् न व्यभिचारस्तर्हि तेनैवार्थान्तरत्वात्, न च लाघवात् पक्षधर्मताबलेनैकसमवायसिद्धिः, पक्षवाह्यतुल्यलाघवस्य अनुपादेयत्वात्, अन्यथा द्रव्यमपि पक्षेऽन्तर्भाव्य समवायसिद्धिप्रसङ्गात् । न चानुभवसिद्धसंयोगाद्बाधः, प्रमाणसमाहारे प्रमेयसमाहाराविरोधात् । न च नानाविशेषणसम्बन्धे एकत्वानेकत्वादर्शनात् तत्र लघुगुरुविषयतासम्भवेऽपि सम्बन्धैकत्वानेकत्वयोर्दर्शनेन तत्र तत्सम्भवात् प्रत्येकविशिष्टबुद्धिपक्षीकरणे लाघवात् समवायसिद्धिः स्वरूपसम्बन्धस्य सम्बन्धिद्वयात्मकत्वेन गौरवाद्धर्मीति न्यायस्याप्येककल्पनालाघवमूलत्वेनाभानवतारादिति वाच्यम्, द्रव्येऽपि तत्सिद्ध्यापत्तेः । न च संयोगत्वावच्छेदेन सम्बन्धत्वकल्पनात् तत्र सम्बन्धान्तरकल्पने लाघववैपरीत्यं गुणगुण्यादिद्वये तु नैवमनुगतं धर्मान्तरमस्ति येन प्रकृतलाघववैपरीत्यं स्यादिति वाच्यं, तत्रापि वस्तुत्वसत्त्वाद्यवच्छेदेन सम्बन्धत्वकल्पनात् । किञ्च प्रतीतेर्विषयनियमोऽनुभवात्सामग्रीभेदाद्वा न तु लाघवादन्यथा सविषयत्वानुमानात् सम्बन्धाविषयत्वमेव स्यात् । अथ विशेषणसम्बन्धनिमित्तका इति साध्यम् हेतौ च सत्यत्वं विशेषणं तेन विशिष्टभ्रमे न व्यभिचारः बुद्धिपदं च प्रत्यक्षपरं तेन नांशतो बाधव्यभिचाराविति समवायसिद्धिरिति चेत्, न, गुणादिविशिष्टप्रत्यक्षे विशेषणसम्बन्धत्वेन न हेतुत्वं सम्बन्धत्वस्य विषयत्वादिगर्भतया जनकतानवच्छेदकत्वादिति मिश्रैरेवोक्तत्वात् । न चात एव गुणादिविशिष्टप्रत्यक्षे गुणादिसमवायत्वेन हेतुत्वं, न च समवायत्वमपि नित्यसम्बन्धत्वरूपमित्युक्तदोषानिस्तार इति वाच्यम्, समवायस्याखण्डतया तद्व्यक्तित्वेनैव हेतुत्वात्, तद्व्यक्तित्वं च तादात्म्येन सा व्यक्तिरेव स्वस्यापि स्वस्मिन् प्रकारत्वं चाविरुद्धमिति वाच्यम्, गुणादिसमवायत्वापेक्षया गुणत्वादिनैव

हेतुत्वौचित्यात् । न चाभावादिविशिष्टबुद्धिव्यावृत्तानुभवसिद्धवैलक्षण्यविशेषवद्बुद्धित्वावच्छिन्नं प्रति समवायं विना नान्यन्नियामकं गुणत्वादिना हेतुत्वे व्यभिचारादिति वाच्यम्, वैलक्षण्यस्य जातिरूपस्य स्मृतित्वानुमितित्वादिना साङ्कर्याद्विषयितारूपस्य च समवायासिद्ध्या दुर्वचत्वात् । एतेन सम्बन्धांशे विलक्षणविषयताशालिगुणादिविशिष्टप्रत्यक्षे तद्धेतुत्वमिति परास्तम् । सत्यलौकिकविशिष्टप्रत्यक्षत्वावच्छिन्नं प्रति विशेषणसम्बन्धत्वेन हेतुत्वं सम्बन्धत्वं चाखण्डमिति तु न समवायसिद्धिक्षमं, स्वरूपसम्बन्धेनैवोपपत्तेः, विशेषणत्वस्यैकस्याभावेन विशिष्यकार्यकारणभावविश्रामाच्च । यत्तु प्रथमानुमानादेव समवायसिद्धिः समवायबाधोत्तरकालकल्पनीयेन स्वरूपसम्बन्धेनार्थान्तराभावादिति मिश्रेणाभिहितं, तन्न, स्वरूपसम्बन्धस्योपजीव्यत्वेन प्रथमोपस्थितिकत्वात् । यदपि तद्घटरूपयोर्विशिष्टबुद्धौ विनिगमनाविरहादुभयोस्सम्बन्धिनोः सम्बन्धत्वं कल्पनीयम् तथा च लाघवादेक एव समवायः सम्बन्धत्वेन कल्प्यते अभावस्थले त्वधिकरणानां नानात्वादेकस्याभावस्यैव सम्बन्धत्वं युक्तमिति न तत्र सम्बन्धान्तरकल्पनप्रतिबन्ध्यवकाश इति, तदपि न,समवायस्तत्र समवायत्वं क्लृप्तभावभेदो नानाधिकरणवृत्तित्वमित्यादिकल्पनानां महागौरवात् । एतेन गुणगुण्यादिस्वरूपद्वये सम्बन्धत्वमतिरिक्तसमवाये वेति विनिगमनाविरहादप्यन्ततः समवायसिद्धिरिति पदार्थमालाकृतो वचनमप्यपहास्तितं,जातेरनुगतत्वेन व्यक्तिसम्बन्धत्वौचित्ये जातिव्यक्त्योः समवायोच्छेदापत्तेश्च । किञ्च रूपिनीरूपिव्यवस्थानुरोधेन रूपादीनां सम्बन्धत्वकल्पनावश्यकत्वात् न समवायस्य सम्बन्धत्वं वाय्वादेर्नीरूपत्वस्य रूपीयतद्धर्मताख्यसम्बन्धाभावादेव पक्षधरमिश्रैरुपपादितत्वात् तद्धर्मतायाश्च तद्रूपाद्यनतिरिक्तत्वात् । यत्तु रूपसमवायसत्त्वेऽपि वायौ स्वभावतो रूपाभावादेव नीरूपत्वमिति चिन्तामणिकृतोक्तं, तन्न, प्रतियोगिसम्बन्धसत्त्वे तत्सम्बन्धावच्छिन्नाभावायोगात् । अथ प्रतियोगिसम्बन्धसत्त्वेऽपि तद्वृत्ताया अभावात् तत्र तदभावाविरोधः । न च तत्सम्बन्धस्तद्वृत्तानियतः, गगनीयसंयोगे व्यभिचारात् । न च वृत्तिनियामकेति विशेषणान्न दोष इति वाच्यम्, करवृत्तितानियामककपालसंयोगवति कपाले कपालाभावसत्त्वेन व्यभिचारात् । यत्र यद्वृत्तितानियामकः सम्बन्धस्तत्र तद्वृत्त्यनियम इति चेत्, तर्हि रूपसमवायस्य वायुवृत्तित्वानियामकत्वादेव वायौ न तद्वृत्त्यमिति चेत् । न । तत्र तद्वृत्तितानियामकत्वं हि तत्र तद्विशिष्टबुद्धिजनकत्वम् अस्ति च वायावपीह रूपमिति धीः, तदभावप्रत्यक्षवादिनापि तत्रावश्यं तत्स्वीकारात् । सारोपरूपा न तु प्रमेति चेत्, न, तदभावधियः सत्यत्वासिद्धौ तदप्रमात्वासिद्धेरिति मिश्रैणैवोक्तत्वात् । वस्तुतस्तत्र तद्विशिष्टधीविरहोऽपि तद्वृत्त्वाभावादेवेत्यन्योऽन्याश्रयः । यत्त्वेकस्यैव समवायस्य किञ्चिदधिकरणावच्छेदेन रूपसम्बन्धत्वकल्पनेनैव व्यवस्थोपपत्तिरिति, तन्न, रूपसम्बन्धत्वं हि रूपप्रकारकविशिष्टज्ञानीयसम्बन्धताख्यविषयताविशेषशालित्वं तच्च

तत्तदधिकरणावच्छेदेन तत्तदधिकरणान्तर्भावेन विशिष्टबुद्धिहेतुत्वेनैव निर्वहतीति महागौरवात्, अस्माकं तु रूपप्रकारकमितिविषयेऽपि रूपसम्बन्ध एव तन्त्रमिति लाघवात् । किञ्चैवं रूपसम्बन्धे न रूपसम्बन्धस्त्वमिति व्यवहारः प्रामाणिकः स्यात् । अन्ये तु रूपिणीरूपव्यवस्थानुरोधाभावेनैव समवायः समनियतकाल-देशावच्छेदकानां सत्त्वव्यापरिमाणपृथक्त्वादीनां नैक एव समवायस्तदभिप्रायेणैव समवायैकत्वप्रवाद इति वदन्ति, तदपि न, गुणत्वावच्छेदेन गुणिसम्बन्ध-म्बन्धत्वकल्पनादतिरिक्तसम्बन्धकल्पनानौचित्यात्, जले स्नेहस्य समवायो न गन्धस्येति प्रतीतिवद् घटरूपयोः सम्बन्धो न घटरसयोरिति प्रतीतेर्जागरूकत्वाच्च । गुणादिसाक्षात्कार इन्द्रियसम्बन्धजन्यो जन्यप्रत्यक्षत्वादित्यपि न समवायसिद्धये पाटवमावहति, चक्षुषोऽप्राप्यकारित्वेनास्मदादिप्रत्यक्षे प्रत्यपि इन्द्रियसम्बन्ध-स्याहेतुत्वात् । तथा हि—चक्षुरप्राप्यकारि अधिष्ठानासम्बद्धार्थग्राहकेन्द्रियत्वात् मनोवत्, अधिष्ठानेत्यादिविशेषणेन स्पर्शनादाविन्द्रियपदप्रदानेन च प्रदीपप्रभायां व्यभिचारपरिहारः । न चाप्रयोजकत्वं, सम्बद्धार्थग्राहकत्वे तस्य करपत्त्रजलावलोकनादिनोपघातानुग्रहप्रसङ्गात् । न चासिद्ध एव तस्योपघातानुग्रहाभावो मुहुर्मुहुः सूरकरजलावलोकनाभ्यां दाहशैत्यलक्षणतद्दर्शनादिति वाच्यम्, अवलोकनानन्तरं चक्षुर्देशं प्राप्तेन मूर्तेन रविकरादिनोपघातसम्भवात्, जलावलोकना-दौ चोपघाताभावेनानुग्रहाभिमानात्, स्वतस्त्वेतं प्राप्तेन च चन्द्रमरीचिनीलादिनानुग्रहोऽपि भवत्येव । यदि च चक्षुः स्वत एवानुग्राहकोपघातकवस्तुनी संसृज्यानुग्रहोपघातौ लभेत तर्हि सूरकरावलोकनादिव करपत्त्रावलोकनादप्यभिघातः स्यात्, तदिदमुक्तं भाष्यकृता—"लोअणमपत्तविसयं मणोव्व जमणुग्गहाइ सुन्नंति।।जलसूराइसु दीसति अणुग्गहविघाया।।१।।उज्जोअ पाविओ रविकराइणा फरिसिण य को दोसो।।मओज्जणुग्गहो पि य उवघायाभावओ सोम्म।।२।। गंतूण रूववेसं पासइ पत्तं सयं व णियमोयं।।पत्तेणउ मुत्तिमया उवघायाणुग्गहा होज्ज त्ति"।।३।।ननु नयनाश्रयना रश्मयो निर्गत्य प्राप्य च वस्तु रविरश्मय इव प्रकाशमादधति सूक्ष्मत्वेन तैजसत्वेन च तेषां वह्न्यादिभिर्दाहादयो न भविष्यन्तीति चेत्, न, चक्षुषस्तैजसत्वस्यैवासिद्धेः ।न च चक्षुस्तैजसं रूपादिषु मध्ये रूपस्यैवाभिव्यञ्जकत्वात् प्रदीपवदित्यनुमानात् तत्सिद्धिः, चक्षुर्विषयसंयोगेनानैकान्तिकत्वात् । द्रव्यत्वे सतीति विशेषणेऽप्यञ्जनविशेषेणानैकान्तिकत्वाच्च । एतेन रूपसाक्षात्कारासाधा-रणकारणं तैजसं रसाद्यव्यञ्जकत्वे सति स्फटिकाद्यन्तरितप्रकाशकत्वात् प्रदीपवदित्यपि निरस्तम् । अञ्जनादिभिन्नत्वे सतीति विशेषणदाने चाप्रयोजकत्वाच्चक्षुः-प्रदीपयोरेकया जात्या व्यञ्जकत्वासिद्धेः । एतेन स्वभावादिकमिवाञ्जनादिकं सहकृत्य मनसैव साक्षात्कृते चाक्षुषत्वभ्रम एवेत्युक्तावपि न क्षतिः । वस्तुत एव-मञ्जनादेः पृथक्प्रमाणत्वापत्तिः, मनो यदसाधारणं सहकार्यासाद्य बहिर्गोचरां प्रमां जनयति तस्य प्रमाणान्तरत्वनियमात् । न च पटपटलाच्छन्नचक्षुषामञ्जना-

दिजनितो निध्यादिसाक्षात्कारो न प्रमेत्युक्तिर्युक्तिसहा, यथार्थप्रवृत्तिजनकत्वेन तत्प्रमात्वस्य व्यवस्थितत्वात् । न च कारणबाधादप्रमात्वं, तस्यैवासिद्धेः । न च स्वप्नादिवदञ्जनादेर्निध्यादिसूचकत्वमेवेति युक्तं, व्याप्तिग्रहादिकं विनानुमितिरूपतत्सूचनासम्भवात् । स्वप्नादिस्थले तु व्याप्तिग्राहकस्वप्नशास्त्राद्यनुसरणनियमादिति दिग् । अथ चक्षुषोऽप्राप्यकारित्वेऽसन्निहितत्वाविशेषात् कुडयादिव्यवहितस्यापि ग्रहणप्रसङ्ग इति चेत्, न, अतिसन्निहितस्य गोलकादेरिव भित्त्यादिव्यवहितस्यापि योग्यताऽभावादेवाग्रहात् । नन्वग्रावच्छेदेनैव चक्षुःसंयोगस्य ग्राहकत्वात् न मूलावच्छेदेन तत्संयुक्तगोलकादिग्रहप्रसङ्गः, कुडयादिव्यवहितानां स्वरूपयोग्यता च स्थैर्यपक्षे न परावर्त्तते क्षणिकत्वपक्षेऽप्यप्रत्यासन्नानां सहकारिणां नातिशयोजनकत्वं प्रत्यासत्तिश्च परेषां निरन्तरोत्पादोऽस्माकं तु संयोगस्तदुभयमपि कृष्णसारस्यार्थेन न सम्भवतीति चेत्, न, शक्तिप्रत्यासत्त्यैवातिशयाधानाल्लोहाकर्षकायस्कान्तादावतिरिक्तप्रत्यासत्त्यदर्शनात्सामीप्यविशेषस्य तत्र सम्बन्धत्वे चात्रापि तेनैवोपपत्तेः । युक्तं चैतत्–संयोगादिनानाप्रत्यासत्त्यकल्पनलाघवात्, न चैवमप्राप्यकारित्वभङ्गः, चक्षुःसंयोगस्य चाक्षुषाजनकत्वेनैव तदुपपत्तेः।वस्तुतः सन्निहितविषयग्रहे व्यवधानाभावकूट एव विषयनिष्ठा योग्यता व्यवहितविषयग्रहे चाञ्जनादिनिष्ठैव शक्तिलक्षणा योग्यता हेतुविषयपुरुषादिभेदेन तद्वैचित्र्यात् । अत एवास्मदादीनामालोकापेक्षयैव विषयग्रहः पेचकादीनां तु न तथेत्युपपद्यते । इत्थं चाव्यवहितचाक्षुषसाक्षात्कारे चक्षुर्व्यवधानाभावादीनां व्यवहितचाक्षुषे चक्षुरञ्जनादीनां विलक्षणशक्तिमत्त्वेन हेतुत्वात् न किञ्चिदनुपपन्नम् । भित्त्यादेश्चक्षुःसंयोगप्रतिबन्धकत्वे तु स्फटिकादीनामपि तथात्वप्रसङ्गात् तद्व्यवहितानामप्यनुपलब्धिप्रसङ्गः । प्रसादस्वभाववतां स्फटिकादीनां न नायनरश्मिगतिप्रतिबन्धकत्वमिति चेत्, तर्हि भित्त्यादीनां चक्षुःप्राप्तिप्रतिबन्धकत्वापेक्षया लाघवात् चाक्षुषप्रतिबन्धकत्वमेव कल्प्यतां, स्वप्राचीस्थपुरुषसाक्षात्कारे स्वप्रतीचीवृत्तित्वसम्बन्धेन भित्त्यादीनां तत्त्वसम्भवात् । यदि च तत्तत्क्रियातत्तदुत्तरदेशादीनामेव संयोगनियामकत्वेनानतिप्रसङ्गाद्भित्त्यादीनां न प्रतिबन्धकत्वमिति विभाव्यते तदा तद्धेतोरिति न्यायेन लाघवात् तत्तन्नयनोन्मीलनस्यैव तत्तच्चाक्षुषहेतुत्वमस्तु किमनन्तसंयोगादिकल्पनया, इन्द्रियसम्बन्धत्वेन प्रत्यक्षहेतुत्वकल्पनात् फलमुखं गौरवं न दोषायेति चेत्, न, इन्द्रियसम्बन्धत्वस्यैकस्याभावेन तथाहेतुताया एवासिद्धेः । तथापि द्रव्यचाक्षुषत्वाद्यवच्छिन्नं प्रति चक्षुःसंयोगत्वादिना हेतुत्वमनुगतमेव, तदुक्तं मणिकृता—प्रत्यक्षविशेषे इन्द्रियार्थसन्निकर्षविशेषो हेतुरनुगत एवेतीति चेत्, न, परमाण्वाकाशादौ व्यभिचारात् । न च महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वस्यापि सहकारित्वात् न दोष इति वाच्यम्, समाकलितसकलनेत्रगोलकस्य दूरासन्नतिमिररोगावयविन उपलम्भप्रसङ्गात् । अत्यन्तासत्त्यभावस्यापि सहकारित्वे चाधिष्ठानसंयुक्ताञ्जनशलाकाया अप्यप्रत्यक्षत्वप्रसङ्गात्,

तथात्वे घटादिवृत्तिध्वंसध्वंसापत्तेः, सत्तादेः कालिकसम्बन्धेन घटनाशानधिकरणत्वात् तत्र तदापत्त्यभावेन सत्त्वेन नाशहेतुत्वाऽकल्पनात् । न च द्वित्रिक्षणस्थायिघटादिसमवेतनाशे स्वप्रतियोगिसमवेतत्वेनैव तथात्वात् तद्धेतुत्वमावश्यकं, तत्रापि स्वप्रतियोगिसमवायिकारणत्वेन कालावच्छिन्नस्वप्रतियोगिसमवेतत्वेन वा तथात्वेऽनतिप्रसङ्गादिति चेत्, न, उक्तहेतुतावच्छेदकेऽक्लृप्तसमवायनिवेशापेक्षया क्लृप्तसत्त्वनिवेशस्यैवोचितत्वात् । द्रव्यजात्यन्यचाक्षुषे महदुद्भूतरूपवद्भिन्नसमवेतत्वेन प्रतिबन्धकत्वात् समवायसिद्धिरिति तु मन्दं, द्रव्यान्यसचाक्षुषत्वावच्छिन्नं प्रति महदुद्भूतरूपवद्भिन्नविशिष्टत्वेन तत्त्वसम्भवादित्यधिकं स्याद्वादरहस्ये । ननु तथापि वैशिष्ट्यमेवास्तु स्वरूपाणामननुगतत्वेनानुगतबुद्ध्यनिर्वाहकत्वादिति चेत्, न, वस्तुन एकानेकस्वभावत्वेन प्रकारांशे संसर्गांशे चानुवृत्तिव्यावृत्तिक्षमत्वादेकस्य पितृपुत्रादिव्यवहारेण तत्त्वसिद्धेः । न च वासनाभेदादेकस्मादप्यनेकव्यवहारोपपत्तिः, तासामपि तन्निमित्तत्वादन्यथा नीलात्पीतवासनाप्रसङ्गात् । तस्यातत्स्वभावत्वान्नैवमिति चेत्, तर्ह्येकस्यापरवासनाऽजनकत्वेऽपि तुल्या युक्तिरन्यथा तु वाङ्मात्रम् । न चैकस्यैव देवदत्तादेः पितृपुत्रादीनां स्वसन्तानगतमनस्कारलक्षणोपादानभेदनिबन्धना पुत्रादिवासनाप्रवृत्तिः, एकस्यानेकसहकारित्वायोगात् अन्यथाऽनेकस्वभावत्वप्रसङ्गात् । एकस्वभावत्वे चैकत्र फले परिनिष्ठितस्वभावात् ततः फलान्तरानुदयप्रसङ्गादनेककार्यकरणैकस्वभावस्य च नामान्तरमात्रविवादपर्यवसायित्वात्, न चानेकस्यैकस्वभावत्वे विश्वैकरूप्यप्रसङ्गः, सत्त्वादिना तदिष्टेः घटत्वादिना त्वनेकस्वभावत्वादेवेति सूक्ष्मधिया पर्यालोचनीयम् । तदेवमतिरिक्तसम्बन्धाभावाद्भेदाभेद एव गुणगुण्यादिसम्बन्धः । एकान्ताभेदेऽन्धस्य घटज्ञाने तद्रूपस्यापि ज्ञानप्रसङ्गः, एकान्तभेदे चावयवगुरुत्वादवयविगुरुत्वोत्कर्षप्रसङ्गः, अवयविगुरुत्वात्यन्तापकर्षस्यावयवगुरुत्वात्यन्तापकर्षाधीनत्वेनावयविन्यत्यन्तापकृष्टमेव गुरुत्वमिति नैयायिकप्रवादस्यान्याय्यत्वात् । अनन्यगत्या समवायेन तत्तदवयवगुरुत्वात्यन्तापकृष्टगुरुत्वे तत्तदवयवित्वादिना हेतुत्वेऽतिगौरवात् । किञ्चात्यन्तभिन्नाभिन्नाभ्यां व्यावृत्तं सामानाधिकरण्यमपि भेदाभेदे प्रमाणं, भेदाभेदोभयत्वेन साध्यत्वे साध्याप्रसिद्धेरभावात् । उभयत्वमप्येकाविशिष्टापरत्वमेवेति चेत्, न, अविशिष्टयोरपि गोत्वाश्वत्वयोरुभयत्वप्रत्ययात् । एतेनैकान्तभेदाभेदान्यतराभावस्य भेदविशिष्टाभेदस्य वा साध्यतायां साध्याप्रसिद्धिः प्रत्येकं साध्यतायां चासाधारण्यमिति निरस्तम् । न च व्यतिरेकव्याप्तौ व्याप्याप्रसिद्धिः प्रतियोगिमति तदभावाभावादिति वाच्यम्, तेन रूपेण प्रतियोगिमति तेन रूपेण तदभावस्यैवानभ्युपगमात् । अन्योऽन्याभावत्वमेककालावच्छिन्नस्वात्यन्ताभावसमानाधिकरणवृत्ति अभावविभाजकोपाधित्वात् अत्यन्ताभावत्ववदित्यपि भेदाभेदे प्रमाणमेव ।

पृथगवच्छेदकावच्छिन्नप्रागभाववृत्तित्वस्यानुपाधित्वाच्छुक्लरूपस्यैव शुक्लाभेदावच्छेदकत्वेन साधनव्यापकत्वात् । न चैकप्रतियोगितावच्छेदकावच्छिन्नभेदस्य
भावयोर्विरुद्धाधिकरणतावच्छेदकावच्छेदेन वृत्तित्वनियमाभावमिति वाच्यम्, विरुद्धत्वस्थले विभिन्नत्वस्यैव लाघवेन निवेशौचित्यात्, अत एव गोत्वा-
वच्छेदेन गव्यश्वभेदो मनुष्यत्वावच्छेदेन तु तदभेद इत्यौपनिषदानां पन्थाः । अश्वत्वावच्छिन्नभेदवति गवि गोत्वावच्छिन्नप्रतियोगिताकतद्भेदाभाव एव
वैरङ्गीक्रियत इति चेत्, अस्माकमपि नीलत्वावच्छिन्नभेदवति घटेऽयुतसिद्धत्वावच्छिन्नतद्भेदाभावाभ्युपगमे किं बाधकम् । वस्तुतो यथा शाखावच्छे-
देन संयोगस्तदभावश्च मूलादिनानावच्छेदेन तथा घटे नीलभेदोऽपि घटत्वावच्छेदेन तदभावस्तु तत्तद्व्यक्तित्वादिनानावच्छेदेनैवेति परिभावनीयम्
। अन्ये तु घटे नीलभेदस्तदन्योन्याभावरूपस्तदभेदस्तु तादात्म्यं न तु तदभाव इति वदन्ति । घटभेदव्यवहारे तस्याहेतुत्वादिति चिन्तामणिकृ-
तोक्तम् । तन्न । प्रमेयमभिधेयाभिन्नमित्यभाभेदव्यवहारार्थं तादात्म्यस्यावश्याश्रयणीयत्वात् । अपरे तु गुणगुणिनोरन्यत्वरूपभेदसत्त्वेऽपि पृथक्त्वरूप-
भेदाभावादभेदः, पृथक्त्वं च प्रविभक्तप्रदेशत्वमित्याहुः । तच्चिन्त्यम् । वस्तुतो वैधर्म्यरूपो भेदः साधर्म्यरूपश्चाभेदोऽविरुद्ध एवातिरिक्ताभावानभ्यु-
पगमात् । अभावाभावत्वं भावत्वव्यापि नवेति न विप्रतिपत्तिः, अभावाभावः प्रतियोग्येवेत्यङ्गीकारेण सिद्धसाधनाद्बाधाच्च । अत एवाभावो भावभिन्नो
नवेत्यपि न, अंशतो बाधात्किन्त्वभावत्वं भावत्वव्याप्यं नवेति । तत्र नैयायिकाः । अभावो भावातिरिक्त एवाधिकरणस्याप्रतियोगिकत्वात् तस्य
च सप्रतियोगिकत्वयानुभूयमानत्वेन तद्रूपत्वायोगात् । अथ सप्रतियोगिकत्वं प्रतियोग्यविषयकबुद्ध्यविषयत्वं तच्च तत्रापि नाभावस्येदंत्वादिनाप्यभाव-
प्रत्यक्षात्किन्त्वभावत्वस्य तस्य च ममापि तथात्वमेव घटवद्भिन्नत्वरूपस्य तस्य घटधीसाध्यत्वादिति चेत्, न, तद्भिन्नत्वस्यापि स्वरूपानतिरेकेणाप्रति
योगिकत्वात्, वस्तुतः प्रतियोग्यवृत्तिरनुयोगिवृत्तिर्यो धर्मस्तज्ज्ञानस्य प्रतियोगिवृत्तित्वेनाज्ञातधर्मग्रहस्य वा भेदग्रहहेतुत्वेन तस्य चात्र भेदरूपस्यैव
संभवेनान्योन्याश्रयाच्च, न चाभावव्यवहारार्थमेव प्रतियोगिज्ञानापेक्षाऽभावस्त्वप्रतियोगिक एवेति वाच्यम्, व्यवहर्तव्यज्ञाने सति तस्यां चेच्छायां व्यव-
हारोदयेन तत्राधिकस्यानपेक्षणात्, हस्तवितस्त्याद्यवच्छेदत्वेन दीर्घत्वग्रहे सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकत्वेन तारत्वादिग्रह एव चावश्यपेक्षणात्,
तत्प्रकारकज्ञानस्यैव तादृशव्यवहारनिबन्धनत्वात्, जातेश्चोत्कर्षस्यैव साधित्वात्, उक्तधर्मप्रकारेण गृहीतस्य परिमाणस्यैव साधकत्वसंभवादतिरिक्त-
दीर्घत्वे मानाभाव इति तु स्वतन्त्राः ॥ अथाभाववत्त्वभावस्याधिकरणानतिरेकेण सर्वमिदं प्रतिबन्दिकवलितमिति चेत्, न, अभावसिद्ध्युत्तरमुपास्य-
तायास्तस्याः फलमुखगौरवतददोषत्वात् ॥ अथाभावग्रहसामर्थ्येन तद्व्यवहारोपपत्तेः किमन्तर्गडुनाभावेनेति चेत्, न, इह घटो नेति प्रतीयमानस्य

तस्यान्तर्गडुत्वायोगात्, अन्यथातिप्रसङ्गात्, किञ्च अभावप्रत्यक्षस्य विशिष्टवैशिष्ट्यप्रत्यक्षरूपत्वेन विशेषणतावच्छेदकप्रकारकनिश्चयमुद्रयैव प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिज्ञानस्य हेतुत्वं न तु स्वातन्त्र्येण, तव तु तद्व्यवहारे तस्य स्वातन्त्र्येण हेतुत्वं कल्पनीयमिति गौरवम्। किञ्च अधिकरणानामननुगतत्वात्कथमनुगतव्यवहारः, मम तु समवायस्वाश्रयसमवायान्यतरसंबन्धेन सत्तात्यन्ताभाव एवाभावत्वमनुगतम्, तच्च स्ववृत्त्यपीति न किंचिदनुपपन्नम्। अत एव घटाभावपटाभावबुद्धीनामभावांशेऽनुगतप्रकारत्वं तस्यैव पूर्वमुपस्थितस्यानुपस्थितस्य वा स्वरूपतः प्रकारत्वात्। यत्तु सविषयकान्यत्वे सति स्वांशे प्रतियोग्यविशेषणकप्रतीत्यविषयत्वमभावत्वम्, ज्ञानसमवायादिवारणायाद्यविशेषणद्वयमिति, तन्न, प्रतीतिघटितत्वेनास्यातीन्द्रियत्वात्, प्रतीत्यविषयत्वमित्यादावभावत्वप्रवेशेनात्माश्रयात्। प्रतीतिपदस्य धीसामान्यपरत्वेऽसंभवात्, लौकिकप्रत्यक्षपरत्वे चातीन्द्रियमात्रातिव्याप्तेः, लौकिकप्रत्यक्षत्वेन विशेषणे चातीन्द्रियाभावाव्याप्तेः, तज्जातीयत्वनिवेशे च तावन्मात्रस्यैवोक्तरूपस्याश्रयणीयत्वात्। न चातिरिक्ताभावस्याधिकरणेन समं संबन्धानुपपत्तिः, संबन्धान्तरमन्तरेण विशिष्टप्रतीतिजननयोग्यत्वस्यैव तत्सम्बन्धत्वात्। नन्वेवं घटाभावभ्रमानुपपत्तिः, योग्यतायाः फलैकगम्यतया तत्रापि सत्त्वात्, न च प्रमायोग्यतासम्बन्धः, सम्बन्धसत्त्वेन तस्यापि प्रमात्वात् अन्यथाऽन्योन्याश्रयात्, योग्यतायाः प्रत्ययाविषयत्वेन विभागाभावाच्च। अथोक्तयोग्यतालिङ्गितं स्वरूपमेव सम्बन्धो भ्रमप्रमयोश्च वस्तुगत्या घटतदभाववद्वृत्त्यन्यत्वगाहित्वेनैव विभाग इति चेत्, न, अतीन्द्रियाभावस्वरूपसम्बन्धेऽव्याप्तेः, तस्य विशिष्टज्ञानाभावादिति चेत्, न, योग्यतावच्छेदकावच्छिन्नस्वरूपद्वयस्यैव सम्बन्धत्वात्। योग्यतावच्छेदकं च क्वचित् प्रतियोगिदेशान्यदेशत्वं, क्वचित् प्रतियोगिदेशत्वे सति प्रतियोगिकालान्यकालत्वं, क्वचित् प्रतियोगितावच्छेदकाभाववत्त्वं, न चात्रापि मत्वर्थसम्बन्धानुयोगः, तत्रापि तादृशयोग्यतावच्छेदकानुसरणात्, नचानवस्था, वस्तुनस्तथात्वात्, प्रत्ययानवस्था तु नास्त्येव उक्तावच्छेदकवत्त्वस्य स्वरूपपरिचायकत्वात्, एवं च तादृगस्वरूपाभावे यत्राभावधीस्तत्र भ्रमत्वमिति किमनुपपन्नम्। वस्तुतः स्वसंबद्धप्रकारावच्छेदेन यत्र ज्ञाने धर्मिसम्बन्धः स्वसम्बद्धधर्म्यवच्छेदेन वा प्रकारसम्बन्धस्तत्र प्रमात्वमन्यत्र भ्रमत्वम्, अत एव विशिष्टज्ञाने प्रकारधर्मिणोः संयोगादिवज्ज्ञानस्यापि परस्परसम्बन्धतया भासमानत्वादिदं रजतमिति भ्रमे रजतत्वस्य शुक्तौ वैज्ञानिकसम्बन्धेन प्रमात्वं संयोगेन च भ्रमत्वम्, अत एव च साकाङ्क्षधर्मधर्मिगोचरज्ञानत्वं परस्यापि विशिष्टधीत्वम्, परस्परवृत्तिज्ञानसम्बन्धावच्छेदकत्वस्यैव साकाङ्क्षपदार्थत्वादित्याहुः। अत्रोच्यते, अभावस्य लाघवात् क्लृप्ताधिकरणस्वरूपत्वे सिद्धे तत्र समनियोगिकत्वं कल्प्यमानमभाववृत्त्यभावेऽन्यप्रतियोगिकत्वमिव तत्काले तद्बुद्धिजनितव्यवहारविषयत्वादिरूपं न बाधकम्, घटो नास्तीत्यादावपि तदुपलक्षितं स्वरूपमेव संसर्ग इति न किञ्चिदनुपपन्नम्। न चाधिकरणस्वरूपत्वेऽननुगमो बाधकः, तथासत्यभावाभावस्यापि प्रतियोग्यात्मक-

त्वविलयेऽपसिद्धान्तप्रसङ्गात्। तत्र तदभावत्वमेकमेवेति चेत्, किं तत्, घटत्वादिकमिति चेत्, कथमस्य तत्त्वं, तेन रूपेण घटादिमत्ताप्रतीतौ घटाद्यभावाभावव्यवहाराविति चेत्, कथं तर्हि तदसाधारणधर्मान्तराणामपि न तथात्वम्। किंचैवं घटत्वादिज्ञानं प्रतियोगिज्ञानं विना न स्यादभावत्वप्रत्यक्षे योग्यधर्मावच्छिन्नप्रतियोगिज्ञानत्वेन हेतुत्वात्, अन्यथा तन्निर्विकल्पकप्रसङ्गात्। अस्तु तर्ह्यभावाभावोऽप्यतिरिक्त एव तृतीयाभावादेः प्रथमाभावादिरूपत्वेनानवस्थापरिहारादिति चेत्, तर्ह्यभावेऽप्येकधर्मकल्पनापेक्षयाऽधिकरणेषु कथञ्चिदेकत्वमेव कल्प्यतां लाघवात्, कीदृशमधिकरणं घटाभाव इति चेत्, यादृशं त्वत्र घटाभावाश्रयः, तच्च घटभिन्नमेव, भेदश्च विषयत्वादिवत्स्वरूपविशेष एव, तदुक्तं स्वरूपात्स्वरूपान्तरव्यावृत्तिरन्योन्याभाव इति, न तु तादात्म्येनाप्रतीयमानत्वे सति प्रतीयमानत्वम्, अप्रतीयमानत्वार्थपर्यालोचनयाऽन्योन्याश्रयात्, एकमेव कपाले घटवत्त्वेदाभदौ च कपालबुद्धिघटवत्कपालबुद्ध्यवच्छेदभेदेन समयभेदेन वा वर्तेते, यथा परेषामेकेनैव भूतले घटवत्त्वेदाभेदौ घटतदभावावच्छेदेन, एवं चाधिकरणस्वरूपत्वेऽप्यभावस्य तद्भिन्नत्वेनैव संशयकोटिता स्वरूपस्यापि प्रतियोगित्वविषयत्वादितत्प्रकारेण भानस्य भवतापि स्वीकारात्। तद्भिन्नाधिकरणत्वमेव वा तदभावत्वम्, तथा च तादृशसंशयस्य तादृशनिश्चयनिवर्त्यतया नाधिकरणज्ञानमात्राद्भानसंशयोच्छेद इति द्रष्टव्यम्। भेदोऽपि स्वरूपानतिरिक्तस्तद्ग्रहसामग्र्या गृहीत एवेति चेत्, सत्यम्, गृहीत एव परं तु भेदत्वेन न गृहीत इति। तालत्वादिकमेव वा तमालादिभेदो भेदव्यञ्जकत्वेनाभिमतस्य वैधर्म्यस्यैव भेदत्वकल्पनौचित्यात्, तच्च दूरत्वादिदोषवशादगृहीतं सत् संदेहमतिपन्थि। न च तमालसंकीर्णतया तद्ग्रहे तद्भिन्नविषयसङ्गोऽसाधारणत्वेन तद्ग्रहस्य तथात्वात्, तथा च तमालावृत्तिधर्मवत्त्वज्ञानमेव तमालभेदसंदेहनिवर्तकमिति दिग्। इदमेव च प्रतियोग्यवृत्त्यनुयोगिवृत्तिधर्मज्ञानम्, न चेदं भेदज्ञानस्य निदानं किंतु तद्व्यवहारस्यैव तद्धेतोरिति न्यायादिति स्मर्तव्यम्। अभावग्रहसामग्र्या एव तद्व्यवहारहेतुत्वे प्रतियोगिज्ञानस्य पृथक्कारणत्वकल्पनं तु न बाधकम्, अभावत्वप्रत्यक्षे तद्धेतुत्वकल्पनावश्यकत्वात्, अन्यथा प्रतियोगिविशेषितत्वप्रत्यक्षे नानाप्रत्यासत्तिकारणत्वकल्पनागौरवादित्यन्यत्र विस्तरः। अभावस्याधिकरणेन सम संबन्धत्वमपि तदभिन्नत्वेनैव, प्रतियोगिप्रतियोगित्वादौ तथैव योग्यत्वकल्पनात्। न चैवं घटकालेऽपि घटाभावधीप्रसङ्गः, यत्काले यद् द्रव्यं येन परिणमते तत्काले तस्य तन्मयत्वात्। न च स्वभावस्य न कादाचित्कत्वमिति शङ्कनीयम्, श्यामरक्तस्वभावयोर्घट एवावस्थात्वदर्शनात्। न च घटस्य तदुभयाधिकरणत्वमेव स्वभावो न तु तदुभयमिति वाच्यम्, रक्ततादशायां घटे श्यामाधिकरणत्वमिति व्यवहारस्य प्रामाण्यप्रसङ्गात्, एवमप्यभावस्याधिकरणात्मत्वसिद्धिः। नन्वेवं मृद्द्रव्ये घटो भविष्यति घटे नष्ट इति प्रतीत्यनुपपत्तिरभेदे आधाराधेयभावानुपपत्तेरिति चेत्, न, द्रव्यत्वेन तस्याधारत्वात् पर्यायत्वेन चाधेयत्वात् प्रागभावप्रध्वंसयोश्च द्रव्यपर्यायोभयरूपत्वात्।

तथाहि—व्यवहारनयादेशात् घटपूर्ववृत्तित्वविशिष्टं स्वद्रव्यमेव घटप्रागभावः, घटोत्तरकालवृत्तित्वविशिष्टं च स्वद्रव्यमेव घटप्रध्वंसः, पूर्वकालवृत्तित्वादिकं च परिचायकं न तु विशेषणमात्माश्रयादिप्रसङ्गात्, विशिष्टस्यातिरिक्तत्वेनानतिप्रसङ्गाच्च, प्रागभावादिप्रतीतौ स्वद्रव्यमेव विशेष्यतया भासते, प्राक्कालवृत्तित्वादिसंसर्गेण प्रतियोगिनः प्रकारतयैव व्यवहारवैचित्र्यादित्यपि वदन्ति। ऋजुसूत्रनयादेशात्तु प्रतियोगिप्राच्यक्षण एव प्रागभावः, उपादेयक्षण एव चोपादानध्वंसः, न च तत्पूर्वोत्तरक्षणयोर्घटोन्मज्जनप्रसङ्गस्तत्संतानोपमर्दनस्यैव तदुन्मज्जननियामकत्वात्, इत्युभयनयसंग्राहिप्रमाणार्पणात् तयोरुभयात्मकत्वसिद्धिरिति व्यक्तं स्याद्वादरत्नाकरे ॥ अथ मुद्गरपातादिनष्टो घट इति प्रतीत्यातिरिक्तनाशानुभवो नहि भूतलं तद्बुद्धिर्वा तज्जन्या तेन विनापि तयोः सत्त्वादिति चेत्, न, विभागजातस्य कपालकदम्बकरूपस्य घटध्वंसस्य मुद्गरपातजन्यत्वात्, मुद्गरपातावधिकस्वोत्तरकालवृत्तिस्वद्रव्यपरिणामी घट इत्युक्तवाक्यस्यार्थः, अत एव स्वाभाविकनाशस्थले न तथाव्यवहार इत्यपि रमणीयम्। एतेनेदं व्याख्यातं—'दृष्टस्तावदयं घटोऽत्र निपतन् दृष्टस्तथा मुद्गरो दृष्टा कर्परसंहतिः परमतोऽभावो न दृष्टः परः। तेनाभाव इति श्रुतिः क निहिता किं वात्र तत्कारणं स्वाधीना कलशस्य केवलमियं दृष्टा कपालावलीति'॥१॥ अथ कालविशेषविशिष्टाधिकरणेनैवाभावान्यथासिद्धाववयव्यादेरप्यसिद्धिप्रसङ्ग इति चेत्, न, कालविशेषस्य द्रव्यपर्यायरूपत्वेन तस्यैवाभावावयव्यादिरूपत्वाद्भेदाभेदेनानुपपत्तिविरहाच्च। एतेन समयविशेषयोगवत्त्वेवास्त्वभावत्वमित्युक्तावपि न क्षतिः, कालस्य स्ववृत्तित्वाविरोधेनेदानीं घटाभाव इति प्रतीत्युपपत्तेः। स्यादेतत् भूतले घटो नास्तीत्यत्र कतमोऽभावः प्रतीयते, न तावदत्यन्ताभावः, तस्य सार्वदिकतादात्म्यपरिणामानधिकरणाधिकरणस्वरूपत्वात्, तदुक्तं, कालत्रयापेक्षिणी तादात्म्यपरिणामनिवृत्तिरत्यन्ताभाव इति, तथाच घटदशायामपि भूतले घटतादात्म्यविरहेण घटो नास्तीति प्रतीत्यापत्तेः। न च संयोगदशायां संयुक्तत्वेन भूतलेपि घटतादात्म्यमस्त्येवेति वाच्यम्; तादात्म्यपदस्यैकत्वार्थताया व्याख्यानात्, तस्य चापृथक्त्वरूपस्य तत्राभावात्। एतेन घटध्वंस एव तत्र विषय इत्यपि निरस्तम्; स्वपरिणामिन्येव तद्ध्वंसाभ्युपगमादिति चेत्। मैवं, भूतले संयोगेन घटो नास्तीति प्रतीतौ संयोगसामान्यनिष्ठाभावप्रतियोगिस्वप्रतियोगिकत्वविशिष्टयत्किञ्चिदनुयोगिकत्वनिरूपकतासंसर्गेण घटस्य प्रकारत्वादनतिप्रसङ्गात्, एतत्प्रतीतिविषयश्चाभावो नाशोऽत्यन्ताभावो वेति यथाबोधमनुसरणीयम्, येषां त्वत्यन्ताभाव एव तादृक्प्रतीतिविषयस्तेषामन्तराश्यामे घटे कथं रक्तत्वमस्तीति प्रतीतिः, अत्यन्ताभावस्वरूपस्य सम्बन्धस्य सामयिकत्वानुपपत्तेः, तत्सम्बन्धत्वस्याव्याप्यवृत्तित्वे तु ध्वंसे रक्तत्वावच्छिन्नप्रतियोगिताकत्वस्य तत्त्वकल्पनौचित्यात्, अत्यन्ताभावे प्रतियोगिनः कालभेदमनन्तर्भाव्यैव लाघवेन विरोधित्वादित्यन्यत्र विस्तरः। प्राभाकरास्तु घटवद्भूतलबुद्धिभिन्ना भूतलबुद्धिर्घटाभावः, नच घटवति घटाज्ञानदशायां तदभावापत्तिः, अन्याभावानभ्युपगमात्, तद्व्यवहारस्य च प्रतियोग्यधिकरणज्ञाने यावत्प-

तियोग्युन्मज्जकसत्त्वे चेष्टत्वात्, न च बाधावतारदशायां तदापत्तिः, प्रतियोगिमत्त्वज्ञानस्यैव बाधकत्वेन तदानीमभावव्यवहाराभावात्, न च बाधितव्यवहारस्य संवादापत्तिः, बाधितत्वेनैवाविसंवादात्, न च प्रतियोगिमत्तानवगाह्यधिकरणबुद्धिप्रतियोगिमत्तावगाह्यधिकरणबुद्ध्योर्विषयतया द्वयोः किं केन बाध्यतां प्रमात्वस्यापि साधारण्यादिति वाच्यम्, अभावव्यवहारभ्रमप्रमात्वानुरोधेन प्रतियोगिमत्तानवगाह्यधिकरणबुद्धेरधिकरणे विषयतया सत्त्वेपि घटाद्यभावत्वेन तत्रासत्त्वात्, यथा परेषां घटध्वंसस्य घटात्यन्ताभावत्वेन स्वात्मनि सत्त्वेपि घटध्वंसत्वेन तत्रासत्त्वं घटध्वंसे घटो ध्वस्त इत्यप्रत्ययात्। यद्वा वस्तुगत्या यः प्रतियोगिमान् तज्ज्ञानभिन्नमधिकरणज्ञानमेव तदभावः, आकाशाद्यभावस्त्वधिकरणसामान्यज्ञानमेव, न चैवमननुगमः, धृतिमद्दृष्टिमद्भावयोर्लक्ष्ययोर्भेदेन लक्षणभेदात्, अथवा आरोप्यसम्बन्धसामान्ये यदधिकरणानुयोगिकत्वयत्प्रतियोगिकत्वोभयाभावस्तदधिकरणज्ञानत्वमेव तत्सम्बन्धावच्छिन्नतत्प्रतियोगिताकाभावत्वमित्याहुस्तच्चिन्त्यम्, अभावस्याधिकरणबुद्धिरूपत्वे केशादिजिज्ञासानुपपत्तेः। भ्रमस्य केशादेर्जिज्ञासापि ग्राहिका तथा च दृश्यतासम्पत्त्यर्थमेव तदुपयोग इति चेत्, तथापि प्रतियोगिमज्ज्ञानभिन्नत्वेनाधिकरणज्ञानस्य स्वप्रकाशेनाग्रहात्कथमभावव्यवहारः, घटनाशस्य बुद्धिरूपत्वे च तन्नाशे तदुन्मज्जनापत्तिः, न च पुरुषान्तरीयबुद्धिसत्त्वात्र तदापत्तिः तथापि बुद्धिनाशस्यात्मनिष्ठत्वेनात्मनि घटनाशो नष्ट इति प्रतीतिप्रसङ्गादिति दिक्। ज्ञानाद्वैतनये पुनरिदमपि मतमनुमतमिति सिद्धमेतत् भावात्मक एवाभाव इति ॥२॥

॥ इति पण्डितपद्मविजयसोदरन्यायविशारदपण्डितयशोविजयविरचिते न्यायालोके द्वितीयः प्रकाशः ॥

अथ किंस्वरूपो भाव इति चेत्, द्रव्यपर्यायोभयात्मा, तत्र द्रव्याणि धर्माधर्माकाशकालजीवपुद्गलभेदात् षोढा। तत्र गतिलक्षणो धर्मास्तिकायः। प्रमाणं च तत्र—गतिपरिणतयोर्जीवपुद्गलयोरलोके गमनविरहान्यथानुपपत्तिरेव। न च तदाभिमुख्यविरहादेव तत्रागतिः, सिद्धपरमाण्वादीनामलोकाभिमुखत्वात्। न च क्रियाविशेषे देशविशेषस्य हेतुत्वाल्लोकदेशस्य गत्यहेतुत्वादेवोपपत्तिरिति वाच्यम्, सहकारिण एव तत्र विशेषकत्वात् तत्त्वत्वेन हेतुत्वे मानाभावादिति दिग्॥ स्थितिलक्षणोऽधर्मास्तिकायः। प्रमाणं च तत्र—स्थितिपरिणतयोर्जीवपुद्गलयोरलोके स्थितिविरहान्यथानुपपत्तिरेव। न चालोके गत्यभावादेव तन्निवृत्तिरूपस्थितिविरहोऽस्तु किमन्तर्गडुनाधर्मास्तिकायेनेति वाच्यम्, गतिनिवृत्तेरपि परिणामान्तररूपत्वात्, निवृत्तेस्तुच्छत्वनिरासात्तद्विरहस्य च धर्मास्तिकायविरहप्रयोज्यत्वे स्थितिनिवृत्तिरूपगतिविरहस्यैवाधर्मास्तिकायविरहप्रयोज्यत्वे विनिगमनाविरहप्रसङ्गादिति दिग्॥ अवगाहनागुणमाकाशम्, मानं च तत्र द्रव्याणां साधारत्वान्यथानुपपत्तिरेव। न च घटादीनां भूतलादिकमेवाधार इति किमन्यगवेषणयेति वाच्यम्, अहस्यमानाधाराणामाधारस्य लाघवादेकस्यैव सिद्धेः। न च तस्याप्याधारान्तरमन्वेषणीयम्, धर्मिग्राहकमानादाधारैकस्वभावस्यैव तस्य सिद्धेः। न चैव व्यभिचारः, आकाशसिद्धेः पूर्वमनु-

पस्थितत्वात्, अस्तु वा देशप्रदेशादिभेदेन तत्र स्वस्यैव स्वाधारत्वम्, अतो न कूटलिङ्गजत्वेनानुमितेर्भ्रमत्वापत्तिः । न च द्रव्यत्वस्य साश्रयत्वेन समं न व्याप्तिरप्रयोजकत्वादिति वाच्यम्, अनौपाधिकसहचाररूपस्यैव तर्कस्य सत्त्वात्, अन्यथा परेषां गुणस्य साश्रयत्वव्याप्तावपि का प्रत्याशा, तथा च कार्यमात्रहेतुत्वेनोपादानप्रत्यक्षरूप एवेश्वरः सिध्येत् न तु तदाश्रयपरमात्मरूप इति दिग् ॥ वर्तनालक्षणः कालः । वर्तना च नवपुराणादिपरिणामः, तत्र चार्धतृतीयद्वीपसमुद्रान्तर्वर्त्ति कालद्रव्यमेव हेतुस्तस्य तद्भावभावित्वात् । अन्ये तु द्रव्यपर्यायरूप एव कालस्तस्यैव वर्तनारूपत्वात् सर्वत्र संभवित्वाच्च । तथा च पारमर्षमपि–'किमियं भंते कालो त्ति पवुच्चइ, गोयमा जीवा चेव अजीवा चेव त्ति' ॥ दिगम्बरास्तु प्रतिलोकाकाशप्रदेशमसंख्येयाः कालाणवो द्रव्यसमयाभिधेया अवतिष्ठन्ते, पर्यायसमयास्तु मन्दगतिस्वभावेन परमाणोराकाशप्रदेशातिक्रमणनियामकतया व्यवतिष्ठन्ते । विशिष्टगतिपरिणामस्य समयांशासाधकत्वात् स्कन्धविशिष्टावगाहनापरिणामस्य व्योमैकदेशांशासाधकत्ववदित्याहुः, तच्चिन्त्यम्, समयस्य क्लृप्तद्रव्यपर्यायत्वस्यैव कल्पनादर्हद्वचनस्य तथैव व्यवस्थितत्वादित्यन्यत्र विस्तरः। चेतनागुणो जीवः, स चोक्तस्वरूप एव॥ ग्रहणगुणं पुद्गलद्रव्यं, तत्र च क्वचित् प्रत्यक्षं क्वचिदनुमानागमादिकं च मानमनुसन्धेयम् । पर्यायाश्चानन्ता इति न तेषां विविच्य विभाग इत्यधिकमत्रत्यं तत्त्वं मत्कृतस्याद्वादरहस्यादावनुसन्धेयम् ॥

॥ इति पण्डितपद्मविजयसोदरन्यायविशारदपण्डितयशोविजयविरचिते न्यायालोके तृतीयः प्रकाशः ॥

(प्रशस्तिः)

कृत्वा न्यायालोकं प्रवचनरागाद्यदर्ज्जितं पुण्यम् । तेन मम दुःखहेतू रागद्वेषौ विलीयेताम् ॥ १ ॥

श्रीविजयदेवसूरीश्वरपट्टोदयगिरावहिमभासः । श्रीविजयसिंहसूरेः साम्राज्ये प्राज्यधर्ममये ॥ २ ॥

श्रीमज्जीतविजयबुधसतीर्थ्यनयविजयविबुधशिष्येण । न्यायविशारदयतिना श्रेयोऽर्थमयं कृतो ग्रन्थः ॥ ३ ॥

विषयानुबन्धबन्धुरमन्यन्न किमप्यतः फलं याचे । इच्छाम्येकं जन्मनि जिनमतरागं परत्रापि ॥ ४ ॥

तेभ्यः कृताञ्जलिरयं तेषामेषा च मम विशेषाशीः । ये जिनवचोऽनुरक्ता प्रथन्ति पठन्ति शास्त्राणि ॥ ५ ॥

अस्मादृशां प्रमादग्रस्तानां चरणकरणहीनानाम् । अब्धौ पोत इवेह प्रवचनरागः शुभोपायः ॥ ६ ॥

॥ संपूर्णोऽयं न्यायालोकग्रन्थः ॥

## महामहोपाध्यायन्यायविशारदन्यायाचार्यपदश्रीयशोविजयगणिविरचितन्यायालोकस्य विषयसूचीपत्रम्.

॥ न्यायालोकः ॥




॥ १ ॥

॥ न्याया-
लोकः ॥

॥ २ ॥

न्यायालोकविषयसूचीपत्रं सम्पूर्णम्

## महामहोपाध्यायन्यायविशारदन्यायाचार्योपपदश्रीयशोविजयगणिविरचितन्यायालोकस्य शुद्धिपत्रम्

| पत्रम् | पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १ | प्र. | ३ | महामहोपाध्याय न्याय | महामहोपाध्यायन्याय |
| १ | द्वि. | ७ | चरमदुख | चरमदुःख |
| १ | द्वि. | १५ | नाम कर्मक्षय | नामकर्मक्षय |
| २ | प्र. | ५ | तत्र | तन्न |
| २ | प्र. | ७ | चार्वाकः स्तन्न | चार्वाकस्तन्न |
| २ | प्र. | ११ | च्छान्दसत्त्वात् | छान्दसत्त्वात् |
| २ | द्वि. | १ | मत्वर्थीयाच् | मत्वर्थीयाच् |
| २ | द्वि. | ३ | विशेपापातात् | विशेपापातात् |
| ३ | प्र. | ५ | तथा वेद्यताया | तथावेद्यताया |
| ३ | प्र. | ९ | प्रत्येकं च्छिद्रान्वयइवेति | प्रत्येकं छिद्रान्वय इवेति |
| ३ | द्वि. | २ | प्रवेश लाघवात् | प्रवेशे लाघवात् |
| ३ | द्वि. | २ | तत्तज्ज्ञान | तत्तज्ज्ञान— |
| ३ | द्वि. | ११ | मनि | मनि— |
| ४ | प्र. | १२ | प्रत्यभिज्ञाविपय | प्रत्यभिज्ञाविपय |
| ५ | प्र. | १ | एतेनदमपि | एतेनेदमपि |
| ६ | द्वि. | ५ | प्रमाणाभावेन | प्रामाण्याभावेन |

| | | | | |
|---|---|---|---|---|
| ८ | द्वि. | १६ | नुमिति मति | नुमितिं मति |
| ९ | प्र. | २ | पन्हिमनुमिनामी | पन्हिमनुमिनोमी |
| १० | द्वि. | २ | मवच्छेदक | नवच्छेदक |
| १० | द्वि. | ३ | यदिद मुक्तं | यदिदमुक्तं |
| १० | द्वि. | १५ | भावात्, | भावात् |
| ११ | प्र. | १३ | परमर्शात् | परामर्शात् |
| १२ | प्र. | ४ | न चाहमेतत् लक्ष | न चाहमेतत्लक्ष |
| १३ | प्र | ४ | वच्छेदनापि | वच्छेदेनापि |
| १३ | प्र | ५ | वच्छेक | वच्छेदक |
| १३ | द्वि. | १६ | प्रसङ्गात्, | प्रसङ्गात्, |
| १४ | द्वि. | ५ | नातिशयाजनकत्वं | नातिशयजनकत्वं |
| १५ | प्र | ४ | शतपत्रशूचीवेध | शतपत्रसूचीवेध |
| १६ | प्र | १० | नवेतितत्र | नवेति । तत्र |
| १६ | द्वि. | १७ | न साधकम् | न साधितम् |

शुद्धिपत्रं सम्पूर्णम्

पदवाक्यप्रमाणपारावारपारीणलोकानुग्रहकृतानेकग्रन्थमहामहोपाध्याय

न्यायविशारदन्यायाचार्यश्रीयशोविजयगणिकृतो न्यायालोकः

समाप्तः

श्रीपोरवाडवणिग्वंशावतंसश्रेष्ठिप्रवरश्रीभगुभाइसुत

श्रीमनसुखभाइश्रेष्ठिवरेण मुद्रापितः

श्री "सीटी" प्रिन्टींग प्रेस—अमदावाद.